स्तुतिरूपास्ता वाचो वर्धंतु। वर्धयंतु । पूजयंत्वित्यर्थः ॥
वर्धंतु । वृधु वर्धने । अस्माण्णिच् । लघूपधगुणः ।
छंदस्युभयथेत्यार्धधातुकत्वाण्णिलोपः । झेरंतादेशः ।
एरुः । पा°३. ४.८६.। इत्युकारः । निघातः । उक्थ्यः ।
वच परिभाषणे । अस्मात्पातॄतुदिवचिरिचीत्यादिना थक् ।
कित्वाद्वचिस्वपीत्यादिना संप्रसारणं । उक्थं शस्त्रं । तेन
स्तुत्यत्वेन तत्र भव उक्थ्यः । भवे छंदसीति यत् । यस्येति
लोपः । तित्स्वरितमिति स्वरितः । दर्शतः ।
भृमृदृशियजीत्यतच्प्रत्ययः । चित्त्वादंतोदात्तः ॥

अग्ने॒ यजिं॑ष्ठो अध्व॒रे दे॒वान्दें॑वय॒ते यंज ।

होतां म॒न्द्रो वि रांज॒स्यति॒ स्रिधः॑ ॥७

अग्नें । यजिं॑ष्ठः । अ॒ध्व॒रे । दे॒वान् । दे॒व॒ऽय॒ते । य॒ज॒ ।

होतां । म॒न्द्रः । वि । रा॒ज॒सि॒ । अतिं । स्रिधः॑ ॥७

अग्ने । यजिष्ठः । अध्वरे । देवान्। देवऽयते । यज ।

होता। मंद्रः । वि। राजसि। अति । स्रिधः ॥७॥

हे अग्ने यजिष्ठो यष्टृतमस्त्वमध्वरे यज्ञे देवयते देवानात्मन इच्छते यजमानाय देवान्यज । तदर्थं यष्टव्याग्न्यादीन्देवान्पूजय। किंच। होता देवानामाह्वाता मंद्रो यजमानस्य मादयिता स त्वं स्रिधः क्षपयितॄञ्छत्रूनति अतिक्रम्य वि राजसि । विशेषेण शोभसे ॥ यजिष्ठः । तुश्छंदसीतीष्ठन् । तुरिष्ठेमेयःस्विति तृचो लोपः ।। नित्त्वादावुदात्तः । देवयते । क्यचश्चित्वादंतोदात्तत्वं । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण तयोः क्यचा सहैकादेश एकादेश उदात्तेनोदात्त इत्यंतोदात्तो देवयच्छब्दः । ततः शतुरनुम इति विभक्तेः दात्तत्वं । यज । यज देवपूजासंगतिकरणदानेषु । अस्मालोट् । सिप् ।

सिपो हिरादेशः । अतो हेरिति हेर्लुक् । निघातः । राजसि । राजृ दीप्तौ । निघातः ॥

स नः॑ पावक दीदिहि द्यु॒मद॒स्मे सु॒वीर्य॑म् ।

भवा॑ स्तो॒तृभ्यो॒ अन्त॑मः स्व॒स्तये॑ ॥८

सः । न॒ः । पा॒व॒क॒ । दी॒दि॒हि॒ । द्यु॒ऽमत् । अ॒स्मे इति॑ । सु॒ऽवीर्य॑म् ।

भव॑ । स्तो॒तृऽभ्यः॑ । अन्त॑मः । स्व॒स्तये॑ ॥८

सः । नः । पावक । दीदिहि। द्युऽमत् । अस्मे इति । सुऽवीर्यं ।

भव । स्तोतृऽभ्यः । अंतमः । स्वस्तये ॥८॥

नः पावकास्मत्संबंधिनः पापस्य शोधक हे अग्ने स पूर्वमंत्रे प्रतिपादितस्त्वं द्युमत्कांतियुक्तं सुवीर्यं शोभन सामर्थ्योपेतं दानभोगार्हं धनमस्मे अस्मभ्यं दीदिहि । यद्वा द्युमत्तेजोयुक्तं सुवीर्यं शोभनवीयपेतं च यथा भवति तथास्मे अस्मदर्थं त्वं दीदिहि । दीप्यस्व । किंच स्तोतृभ्यः । षष्ट्यर्थे चतुर्थी । त्वद्विषयस्तुतिकारिणां होत्रादीनां स्वस्तयेऽविनाशनाय क्षेमायांतमोंऽतिकतमस्तेषामतिशयेन समीपवर्ती भव ॥ पावक । पूञ् पवने। अस्माद्धातोर्ण्वुच् । णित्त्वाद्वृद्धिः । वोरकादेशः । आमंत्रितत्वादाष्टमिकमनुदात्तत्वं । दीदिहि। दिवु क्रीडादौ। अस्माद्यङ् । तुजादीनामित्यभ्यासस्य दीर्घत्वं । संज्ञापूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावः । बहुलं छंदसीति यङो लुक् । लोटि सिप् । चर्करीतं परस्मैपदमदादिवच्चेति वचनाच्छपो लुक् । सिपो हिरादेशः । लोपो व्योर्वलीति वलोपः । हेरपित्त्वादगुणः । निघातः । द्युमत् । दिव उदित्युकारः । ह्रस्वनुड्भ्यामिति

मतुप उदात्तत्वं । सुवीर्यं । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । अंतमः । अंतोऽस्यास्तीत्यंतिकः । अत इनिठनाविति ठन्। अतिशयेनांतिक इत्यतिशायने तमबिति तमप्। तमे तादेश्चेति तादिलोपः। नित्त्वादाद्युदात्तः । स्वस्तये। प्रातिपदिकस्वरः ॥

तं त्वा॒ विप्रा॑ विप॒न्यवो॑ जागृ॒वांस॒ः समिं॑न्धते ।

ह॒व्य॒वाह॒मम॑र्त्यं सहो॒वृध॑म् ॥९

तम् । त्वा॒ । विप्राः॑ । वि॒प॒न्यवः॑ । जा॒गृ॒ऽवांसः॑ । सम् । इ॒न्ध॒ते॒ ।

ह॒व्य॒ऽवाह॑म् । अम॑र्त्यम् । स॒ह॒ःऽवृध॑म् ॥९

तं। त्वा । विप्राः । विपन्यवः । जागृऽवांसः । सं। इंधते ।

हव्यवाहं। अमर्त्यं।सहःऽवृधं ॥ ९॥

हे अग्ने विप्राः स्तुतीनां प्रेरका जागृवांसोऽग्निहोत्रादिकर्मण्यप्रमत्ततया प्रबुद्धा विपन्यवः । विपन्युशब्दो मेधाविनमाचष्टे । विपश्चिद्विपन्युरिति तन्नामसु पाठात् । विपन्यवो मेधाविनः स्तोतारो हव्यवाहं हव्यानां वोढारममर्त्यं मरणधर्मरहितं सहोवृधं सहसा मथनरूपेण बलेन वर्धमानं तादृशं त्वा त्वां समिंधते । सोमाद्याहुतिभिः सम्यग्दीपयंति ॥ विप्राः । टुवप बीजसंताने । अस्माद्धातोर्ऋज्रेंद्राग्रवज्रविप्रेति रन्प्रत्ययेत्वयोर्निपातनादाद्युदात्तत्वं । विपन्यवः । विविधं पनं पननं स्तुतिं यातीति विपन्युः । मृगय्वादयश्चेति कः । अकारलोप श्छांदसः । प्रत्ययस्वरः । जागृवांसः । जागृ निद्राक्षये। अस्माल्लिट् । तस्य क्वसुः । उगिदचामिति नुम् । द्विचनाभावश्छांदसः । वस्वेकाजाद्धसामिति नियमादिडभावः । जाग्रोऽविचिणल्ङित्सु । पा० ७. ३.

८५.। इति गुणो न भवति तत्र विरित्यत्र क्वसोरपि गृहीतत्वात् । प्रत्ययस्वरः । इंधते । ञिइंधी दीप्तौ । अंतर्भावितण्यर्थोऽयं । निघातः । हव्यवाहं । वह प्रापणे । वहश्चेति ण्विः । उपधावृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वं । सहोवृधं । वृधु वर्धने । क्विप् चेति क्विप् ॥ ॥ ८॥

# ऋग्वेदः सूक्तं ३.११

ऋग्वेदः - मण्डल ३
← सूक्तं ३.१०
सूक्तं ३.११
गाथिनो विश्वामित्रः
सूक्तं ३.१२ →

## दे. अग्निः। गायत्री

अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः ।

स वेद यज्ञमानुषक् ॥१॥

स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः ।

अग्निर्धिया समृण्वति ॥२॥

अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः ।

अर्थं ह्यस्य तरणि ॥३॥

अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् ।

वह्निं देवा अकृण्वत ॥४॥

अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।

तूर्णी रथः सदा नवः ॥५॥

साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।

अग्निस्तुविश्रवस्तमः ॥६॥

अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः ।

क्षयं पावकशोचिषः ॥७॥

परि विश्वानि सुधिताग्नेरश्याम मन्मभिः ।

विप्रासो जातवेदसः ॥८॥

अग्ने विश्वानि वार्या वाजेषु सनिषामहे ।

त्वे देवास एरिरे ॥९॥

## सायणभाष्यम्

अग्निर्होतेति नवर्चमेकादशं सूक्तं वैश्वामित्रं गायत्रमाग्नेयं । अग्निर्होता गायत्रमित्यनुक्रांतत्वात् ॥ प्रातरनुवाकाश्विनशस्त्रयोर्गायित्रे छंदसीदं सूक्तं । सूत्रितं हि । अग्निर्होताग्न इळेति चतस्रः । आ° ४.१३.। इति ॥ आधाने प्रथमायां पवमानेष्टौ स्विष्टकृतो याज्याग्निर्होतेत्येषा स हव्यवाळमर्त्य इति पुरोनुवाक्या । द्वितीयपवमानेष्टौ स्विष्टकृतोऽनुवाक्या साह्वानिति । सूत्रितं च । साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये । आ°२.१.। इति ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रेऽभि प्रयांसीति वैकल्पिकोऽनुरूपस्तृचः । अत्र सूत्रं । प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा । आ° ७. ८.। इति ॥

अ॒ग्निर्हो॑ता॑ पु॒रोहि॑तोऽध्व॒रस्य॒ विच॑र्षणिः ।

स वे॑द य॒ज्ञमा॑नु॒षक् ॥१

अ॒ग्निः । होता॑ । पु॒रःऽहि॑तः । अ॒ध्व॒रस्य॑ । विऽच॑र्षणिः ।

सः । वे॒द॒ । य॒ज्ञम् । आ॒नु॒षक् ॥१

अग्निः। होता। पुरःऽहितः। अध्वरस्य। विऽचर्षणिः ।

सः। वेद । यज्ञं। आनुषक् ॥१॥

विश्वामित्रः स्तौति । होता देवानामाह्वाता पुरोहितः पुरत एवाभिमतफलसंपादकत्वेन हितकारी। यद्वा पुरः पूर्वभाग आहवनीयरूपेण हितो निहित इति पुरोहितः । अध्वरस्य यज्ञस्य विचर्षणिर्विशेषेण द्रष्टा विचर्षणिर्विश्वचर्षणिरिति तन्नामसु पाठात् । स तथाविधोऽग्निरानुषगानुपूर्व्येण सक्तं

यज्ञमग्निष्टोमादिकं वेद । जानाति ॥ वेद । विद ज्ञाने।
विदो लटो वेति तिपो णलादेशः । लघूपधगुणः । निघातः
। आनुषक् । आ समंतादनुषजतीत्यानुषक् । षन्ज संगे।
धातुषकारस्य सकारः। क्विप् चेति क्विप् ।
अनिदितामित्युपधालोपः । उपसर्गात्सुनोतीति षत्वं ॥

स ह॑व्य॒वाळम॑र्त्य उ॒शिग्दू॒तश्च॒नो॑हितः ।

अ॒ग्निर्धि॒या समृ॑ण्वति ॥२

सः । ह॒व्य॒ऽवाट् । अम॑र्त्यः । उ॒शिक् । दू॒तः । चनः॑ऽहितः ।

अ॒ग्निः । धि॒या । सम् । ऋ॒ण्व॒ति॒ ॥२

सः । हव्यवाट् । अमर्त्यः । उशिक् । दूतः । चनःऽहितः ।

अग्निः । धिया। सं । ऋण्वति ॥२॥

स हव्यवाट् हविषो वोढामर्त्यो मरणधर्मरहित उशिक्
हविः कामयमानो दूतो देवानां दूतश्चनसे
हविर्लक्षणायायान्नाय हितो निहितः । यद्वा चनोहितः ।
चनोऽन्नं हविर्लक्षणं हितमस्येति चनोहितः । स
तथाविधोऽग्निर्धिया प्रज्ञया समृण्वति। संगच्छते ।
कर्मविषयप्रज्ञान्वितोऽग्निरस्मानपि
तादृक्प्रज्ञान्वितान्करोत्वित्याशास्ते ॥ हव्यवाट्। वह
प्रापणे । वहश्चेति ण्विः । ढत्वजश्त्वचर्त्वानि ।
कृदुत्तरपदप्रकृतिस्वरत्वं । उशिक् । वश कांतौ ।
इजिरित्यनुवृत्तौ वशेः किच्चेतीजिप्रत्ययः । तस्य कित्वात्
गृहिज्येति संप्रसारणं । प्रत्ययस्वरः। चनोहितः ।
चनःशब्दश्चायतेरन्ने ह्रस्वश्चेत्यसुनंतः । चकारान्नुडागमः ।
तस्मिन्यलोपः । नित्त्वादाद्युदात्तः ।। पुनश्चनसोश्छंदसि
गतिसंज्ञा वक्तव्या । पा॰ १. ४. ६०. २.। इति गतिसंज्ञायां
गतिरनंतर इति प्रकृतिस्वरत्वं ।। बहुव्रीही तु
पूर्वपदप्रकृतिस्वरत्वं । धिया। सावेकाच इति

विभक्तेरुदात्तत्वं । ऋण्वति । ऋणु गतौ । लेटि तनादित्वादुप्रत्ययः । लेटोऽडाटावित्यागमः ॥

अ॒ग्निर्धि॒या स चेंतति के॒तुर्य॒ज्ञस्यं पू॒र्व्यः ।

अर्थं॒ ह्यंस्य त॒रणिं ॥३

अ॒ग्निः । धि॒या । सः । चे॒त॒ति॒ । के॒तुः । य॒ज्ञस्यं । पू॒र्व्यः ।

अर्थंम् । हि । अ॒स्य॒ । त॒रणिं ॥३

अग्निः । धिया। सः । चेतति । केतुः । यज्ञस्य। पूर्व्यः ।

अर्थं। हि। अस्य । तरणि ॥३॥

यज्ञस्याग्निष्टोमादेः केतुः प्रज्ञापकः पूर्व्यः पूर्वे भवञ्चिरंतनः स तथाविधोऽग्निर्धिया प्रज्ञया चेतति । सर्वं

जानीते । अस्यैतादृशस्याग्नेरर्थं गमनस्वभावं तेजोऽस्याकाशे दृश्यमानस्य तमसस्तरणि हि । तारकं खलु । निवर्तकमिति यावत् ॥ चेतति । चिती संज्ञाने। निघातः । अर्थं । ॠ गतौ । उषिकृषिगर्तिभ्यस्थन्निति थन् । गुणः । नित्वादाद्युदात्तः । तरणि । तॄ प्लवनतरणयोः । अर्तिसृभृधृधमीत्यादिनानिप्रत्ययः । गुणः । प्रत्ययस्वरः ॥

अ॒ग्निं सू॒नुं सनं॑श्रुतं॒ सहं॑सो जा॒तवें॑दसम् ।

वह्निं॑ दे॒वा अं॑कृण्वत ॥४

अ॒ग्निम् । सू॒नुम् । सनं॑ऽश्रुतम् । सहं॑सः । जा॒तऽवें॑दसम् ।

वह्निं॑म् । दे॒वाः । अ॒कृ॒ण्व॒त॒ ॥४

अग्निं । सूनुं । सनऽश्रुतं । सहसः । जातऽवेदसं ।

वह्निं। देवाः । अकृण्वत ॥४॥

सहसः सूनुं बलस्य पुत्रं मथनरूपेण बलेन निष्पाद्यमानत्वात् सनश्रुतं सनातनत्वेन प्रसिद्धं जातवेदसं जातप्रज्ञं तमिममग्निं देवा हविर्भुजो देवा वह्निं हविषां वोढारमकृण्वत । अकुर्वत ॥ सनश्रुतं । श्रु श्रवणे । कर्मणि क्तः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । वह्निं । वह प्रापणे । निरित्यनुवृत्तौ वहिश्रीत्यादिना निप्रत्ययः । अकृण्वत । कृवि हिंसाकरणयोः । इदित्वान्नुम् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः । अकारश्चांतादेशः ।। लङि व्यत्ययेनात्मनेपदं । निघातः ॥

अदा॑भ्यः पुरए॒ता वि॒शाम॒ग्निर्मानु॑षीणाम् ।

तूर्णी॒ रथ॒ः सदा॒ नवः॑ ॥५

अदा॑भ्यः । पु॒रः॒ऽए॒ता । वि॒शाम् । अ॒ग्निः । मानु॑षीणाम् ।

तूर्णिः॑ । रथः॑ । सदा॑ । नवः॑ ॥५

अदाभ्यः। पुरःऽएता। विशां। अग्निः । मानुषीणां ।

तूर्णिः । रथः। सदा। नवः ॥५॥

मानुषीणां मनोर्जातानां विशां प्रजानां पुरएता सन्मार्गप्रदर्शनेनाग्रतो गंतात एव तूर्णिस्ताः प्रजा वैदिककर्मप्रवर्तकत्वेनानुग्रहीतुं त्वरायुक्त आलस्यरहितो रथो हविषां वहनाद्रथसदृशः सदा सर्वदा तत्कर्मणि नवो नूतनः पुनर्मथनादभिनव एवंविधोऽग्निरदाभ्यः । अहिंस्यः । न केनापि तिरस्कार्य इत्यर्थः ॥ अदाभ्यः । दंभु दंभे । दभेश्चेति वक्तव्यमिति कर्मणि ण्यत् । उपधावृद्धिः । न दाभ्योऽदाभ्यः । नञ्समासे तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरत्वं । पुरएता । इण गतौ । ण्वुल्तृचाविति

तृच् । गुणः । चित्त्वादंतोदात्तः । मानुषीणां । मनोर्जातावञ्यतौ षुक् चेत्यञ्। टिड्ढाणञिति ङीप्। ञित्वादाद्युदात्तः । तूर्णिः । ञित्वरा संभ्रम इति धातोर्निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति निप्रत्ययः । ज्वरत्वरेत्यादिना ऊद्। तस्य नित्त्वादाद्युदात्तः । संहितायां ढ्रलोपे पूर्वस्येति दीर्घः। रथः । हनिकुषिनीरमिकाशिभ्य इति क्थन्प्रत्ययः । कित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः । नित्त्वादाद्युदात्तः । सदा । स्वरादिष्वाद्युदात्तत्वेन पठितत्वादाद्युदात्तः ॥ ॥ ९ ॥

सा॒ह्वान्विश्वा॑ अभि॒युज॒ः क्रतु॑र्दे॒वाना॒ममृ॑क्तः ।

अ॒ग्निस्तु॒विश्र॑वस्तमः ॥६

स॒ह्वान् । विश्वाः॑ । अ॒भि॒ऽयुजः॑ । क्रतुः॑ । दे॒वानां॑म् । अमृं॑क्तः ।

अ॒ग्निः । तु॒विश्रं॑वःऽतमः ॥६

सह्वान्। विश्वाः।अभिऽयुजः। क्रतुः। देवानां। अमृक्तः ।

अग्निः। तुविश्रवःऽतमः॥६॥

अभियुजोऽभियोक्त्रीर्विश्वाः सर्वाः सेनाः साह्वान्सहमानः स्वबलेन तिरस्कुर्वाणोऽत एवामृक्तः शत्रुभिरहिंसितो देवानां क्रतुः कर्ता हविष्प्रदानेन पोषक एवंभूतोऽग्निस्तुविश्रवस्तमः । तुविशब्दो बहुवाची । तुवि पुरु इति तन्नामसु पाठात् । श्रवःशब्दोऽन्नवाची । श्रव इत्यन्ननाम श्रूयते । नि० १०.३.। इति निरुक्तेऽभिधानात् ।। अतिशयेन बहुविधान्नोपेतो वर्तते । यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान्करोत्विति भावः ॥

साह्वान् । षह मर्षण इत्यस्य क्वसौ दाश्वान्साह्वान्मीढ्वांश्चेति निपातनाद्विर्वचनमिडागमश्च न भवति परस्मैपदं च भवति । क्वसुस्वरः । क्रतुः । कृञः कतुः । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । तुविश्रवस्तमः । तु वृत्तिहिंसापूर्तिषु । अस्मादीणादिकः किप्रत्ययः । कित्त्वाद्गुणाभावः । उवङादेशः । अंतोदात्तः । श्रवः । श्रु श्रवणे । श्रूयतेऽन्नमिति कर्मण्यसुन्प्रत्ययः । अतिशयेन तुविश्रवा इत्यतिशायने तमबिति तमप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

अ॒भि प्रयां॑सि॒ वाह॑सा दा॒श्वाँ अं॑श्नोति॒ मर्त्यः॑ ।

क्षयं॑ पाव॒कशो॑चिषः ॥७

अ॒भि । प्रयां॑सि । वाह॑सा । दा॒श्वान् । अ॒श्नो॒ति॒ । मर्त्यः॑ ।

क्षयं॑म् । पा॒व॒कऽशों॑चिषः ॥७

अभि। प्रयांसि। वाहसा। दाश्वान्। अश्नोति। मर्त्यः।

क्षयं। पावकऽशोचिषः ॥७॥

दाश्वान हविषां दाता मर्त्यो मनुष्यो यजमानो वाहसा हविषां वाहकेनाग्निना प्रयांस्यन्नान्यभ्यश्नोति । अभितः सर्वतः प्राप्नोति । किंच पावकशोचिषः शोधकदीप्तेरग्नेः सकाशात् क्षयं गृहं चाभ्यश्नोति ॥ प्रयांसि ।। प्रीञ् तर्पणे । अस्माद्धातोरंतर्भावितण्यर्थादसुन्प्रत्ययः । प्रीणयंति भक्षमिति प्रयांस्यन्नानि । नित्त्वादाद्युदात्तः । वाहसा। णिदित्यनुवृत्तौ वहिहाधाभ्यश्छंदसीत्यसुन्। णित्वादुपधावृद्धिः । नित्स्वरः । दाश्वान् । दाशृ दान इत्यस्य क्वसौ दाश्वान्साह्वानिति निपातनादिडागमो द्विर्वचनं च न भवति । क्वसुन्प्रत्ययस्वरः। अश्नोति । अशू व्याप्तौ । व्यत्ययेन परस्मैपदं । निघातः ॥

परि॒ विश्वा॑नि॒ सुधि॑ता॒ग्नेर॑श्याम॒ मन्म॑भिः ।

विप्रा॑सो जा॒तवे॑दसः ॥८

परि॑ । विश्वा॑नि । सुऽधि॑ता । अ॒ग्नेः । अ॒श्या॒म॒ । मन्म॑ऽभिः ।

विप्रा॑सः । जा॒तऽवे॑दसः ॥८

परि।विश्वानि। सुऽधिता। अग्नेः। अश्याम। मन्मंऽभिः।

विप्रासः।जातऽवेदसः॥८॥

जातवेदसो जातप्रज्ञा विप्रासो मेधाविनो होत्रादयो वयमग्नेस्तव संबंधिभिर्मन्मभिर्मननीयैः स्तोमैर्विश्वानि सर्वाणि सुधिता सुहितानि सुष्ठु हितान्यभिलषितानि वसूनि पर्यश्याम । सर्वतः प्राप्नुयाम । जातवेदस इत्यग्नेर्वा

विशेषणं । जातानि सर्वाणि वेत्तीति जातवेदाः सर्वज्ञ इत्यर्थः । एतादृशं जातवेदस्त्वमग्नेरेवोचितमिति तद्विशेषणत्वं युक्तं ॥ सुधिता। डुधाञ् धारणपोषणयोरित्यस्माद्धातोर्निष्ठायां छंदसीत्यनुवृत्तौ सुधितवसुधितेत्यादिना निपातितः । शेश्छंदसि बहुलमिति शेर्लुक् । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । अश्याम । अशू व्याप्तौ । बहुलं छंदसीति श्नुप्रत्ययस्य लुक् । व्यत्ययेन परस्मैपदं । यासुट् परस्मैपदेषूदात्त इति यासुट्। लिङः सलोप इति सलोपः । अदंतत्वाभावादियादेशो न भवति । मसः सकारस्य नित्यं ङित इति लोपः ।। निघातः । मन्मभिः । मनु अवबोधने । अन्येभ्योऽपि दृश्यंत इति मनिन् । नित्स्वरः ॥

अग्ने॒ विश्वा॑नि॒ वार्या॒ वाजे॑षु सनिषामहे ।

त्वे दे॒वास॒ एरि॑रे ॥९

अग्ने॑ । विश्वा॑नि । वार्या॑ । वाजे॑षु । स॒नि॒षा॒म॒हे॒ ।

त्वे इति॑ । दे॒वासः॑ । आ । ई॒रि॒रे॒ ॥९

अग्ने। विश्वानि। वार्या। वाजेषु । सनिषामहे ।

त्वे इति । देवासः । आ। ईरिरे ॥९॥

हे अग्ने वार्या वरणीयानि संभजनीयानि विश्वानि सर्वाणि धनानि वाजेषु युद्धेषु सनिषामहे । वयं संभजामहे । यतः कारणाद्देवासः पूर्वमस्माभिरिष्टा देवा अस्मदभिमतफलप्रदानाय त्वे त्वय्येरिरे । आ समंतादगमन् । त्वयि प्रविष्टा इत्यर्थः । सर्वथापि त्वत्सकाशात् फलं लभेमहीति भावः ॥ वार्या । वृङ संभक्तौ । ऋहलोर्ण्यदिति ण्यत् । शेश्छंदसि बहुलमिति शेर्लुक् । ईडवंदेत्यादिनाद्युदात्तः । वाजेषु ।

वृषादित्वादाद्युदात्तः । सनिषामहे । वन षण संभक्तौ । धात्वादेः षः सः । लेटि सिब्बहुलमिति सिप्। सिप आर्धधातुकत्वादिडागमः । लेटोऽडाटावित्यडागमः । व्यत्ययेनात्मनेपदं । निघातः । त्वे । युष्मच्छब्दस्य सप्तम्यां त्वादेशः । सुपां सुलुगिति शेआदेशः । शे । पा० १.१.१३.। इति प्रगृह्यसंज्ञा। ईरिरे। ईर गतावित्यस्मात्परस्य लिटो झस्य इरेजादेशः । इजादेश्च गुरुमत इत्याम्न भवति मंत्रत्वात् । निघातः ॥ ॥ १० ॥

# ऋग्वेदः सूक्तं ३.१२

← सूक्तं ३.११

ऋग्वेदः - मण्डल ३

सूक्तं ३.१२

गाथिनो विश्वामित्रः

सूक्तं ३.१३ →

## दे. इन्द्राग्नी। गायत्री

इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् ।

अस्य पातं धियेषिता ॥१॥

इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।

अया पातमिमं सुतम् ॥२॥

इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।

ता सोमस्येह तृम्पताम् ॥३॥

तोशा वृत्रहणा हुवे सजित्वानापराजिता ।

इन्द्राग्नी वाजसातमा ॥४॥

प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।

इन्द्राग्नी इष आ वृणे ॥५॥

इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।

साकमेकेन कर्मणा ॥६॥

इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः ।

ऋतस्य पथ्या अनु ॥७॥

इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च ।

युवोरप्तूर्यं हितम् ॥८॥

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।

तद्वां चेति प्र वीर्यम् ॥९॥

## सायणभाष्यम्

‘इन्द्राग्नी' इति नवर्चं द्वादशं सूक्तं वैश्वामित्रमैन्द्राग्नम् । तथा चानुक्रम्यते - इन्द्राग्नी ऐन्द्राग्नम्' इति । ‘ गायत्रं तु ' इति तु शब्दादिदमपि सूक्तं गायत्रम् । इन्द्राग्नी देवता । आभिप्लविकेष्वहःसु प्रातःसवनेऽच्छावाकशस्त्रे अवापार्थमिदं सूक्तम्। 'अभिप्लवपृष्यिानहानि' इति खण्डे सृत्रितम् ‘ इन्द्राग्नी गतं ता हुवे ययोरिदम् ' ( आश्व, श्रौ. ७. ५) इति । अग्निष्टोमेऽच्छावाकशस्त्रे ‘ इन्द्राग्नी आ गतम्' इति स्तोत्रियस्तृचः । तस्यैवाच्छावाकस्याद्या शस्त्रयाज्या । ‘इन्द्राग्नी आ गतं सुतमिति याज्या ' ( आश्व. श्रौ. ५. १० ) इति सूत्रितत्वात् । चतुर्विंशेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'इन्द्राग्नी आ गतं सुतम् ' इति षळहस्तोत्रियः । ‘ इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहत् ' (आश्व. श्रौ. ७. २) इति सूत्रितम्। अग्निष्टोमाच्छावाकशस्त्रे ‘तोशा वृत्रहणा हुवे'

इत्याद्यास्तिस्रः । सूत्रितं च--- तोशा वृत्रहणा हुव इति तिस्रः ' ( आश्व. श्रौ. ५. १०) इति ।

अग्निष्टोमेऽच्छावाकशस्त्रे ‘इन्द्राग्नी अपसस्परि' इत्यनुरूपः । सूत्रितं च- ‘ इन्द्राग्नी आ गतं सुतमिन्द्राग्नी अपसस्परि' ( आश्व. श्रौ. ५. १० ) इति ॥

इन्द्रा॑ग्नी॒ आ ग॑तं सु॒तं गी॒र्भिर्नभो॒ वरे॑ण्यम् ।

अ॒स्य पा॑तं धि॒येषि॒ता ॥१

इन्द्रा॑ग्नी॒ इति॑ । आ । ग॒त॒म् । सु॒तम् । गीः॒ऽभिः । नभः॑ । वरे॑ण्यम् ।

अ॒स्य । पा॒त॒म् । धि॒या । इ॒षि॒ता ॥१

इन्द्राग्नी इति । आ । गतम् । सुतम् । गीःऽभिः । नभः । वरेण्यम् ।

अस्य । पातम् । धिया । इषिता ॥१

इन्द्रश्चाग्निश्च “इन्द्राग्नी हे देवौ "सुतम् अभिषवादिसंस्कारैः संस्कृतमत एव "वरेण्यं वरणीयं संभजनीयम् इमं सोमं प्रति "गीर्भिः अस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिराहूतौ सन्तौ "नभः नभसः स्वर्गस्थानात् “आ “गतम् आगच्छतम् । आगत्य च "धिया अस्माभिः क्रियमाणे कर्मणि “इषिता प्रेरितौ युवाम् "अस्य "पातम् इमं सोमं पिबतम् । यद्वा धिया अस्मदीयया बुद्ध्या इषितौ प्राप्तौ अस्मद्भक्त्या प्रेरितौ युवामिमं सोमं पिबतम् ॥ इन्द्राग्नी । इन्द्रश्चाग्निश्च ‘ द्वन्द्वे घि' ( पा. सू. २.२.३२ ) इत्यग्निशब्दस्य पूर्वनिपाते प्राप्ते अजाद्यदन्तम् ( पा, सू. २. २. ३३ ) इतीन्द्रशब्दस्य पूर्वनिपातः । पादादित्वान्निघातप्रतिषेधः । षाष्ठिकस्वरः । गतम् । 'गम्लृ सृप्लृ गतौ'। ‘ बहुलं छन्दसि ' इति शपो लुकि सति ‘ अनुदात्तोपदेश' इत्यादिना मकारलोपः । निघातः । वरेण्यम् । वृङ संभक्तौ । ‘ वृङ एण्यः ।

वृषादित्वाद्युदात्तः । पातम् ।' पा पाने । ‘ सर्वेविधयश्छन्दसि विकल्प्यन्ते' इति न पिबादेशः । इषिता । इष गतौ ' इत्यस्माद्धातोर्निष्ठायां ‘तीषसह ' इतीडागमः। ‘ आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते ॥

इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।

अया पातमिमं सुतम् ॥२

इन्द्राग्नी इति । जरितुः । सचा । यज्ञः । जिगाति । चेतनः ।

अया । पातम् । इमम् । सुतम् ॥२

इन्द्राग्नी इति । जरितुः । सचा । यज्ञः । जिगाति । चेतनः ।

अया । पातम् । इमम् । सुतम् ॥२

हे "इन्द्राग्नी “जरितुः स्तोतुः "सचा स्वर्गादिलक्षणफलप्राप्तौ सहायभूतः "यज्ञः ज्योतिष्टोमादियज्ञसाधनभूतः "चेतनः इन्द्रियाणां चेतयिताप्यायनकारी सन् असौ सोमः "जिगाति युवाम् अभिगच्छति । "अया अस्मदीयस्तुतिलक्षणयानया वाचाहूतौ सन्तौ "सुतम् अभिषवादिसंस्कारोपेतम् “इमं सोमं "पातं पिबतम् ॥ जिगाति । • गा स्तुतौ ' इत्ययं धातुरत्र गमने वर्तते । छन्दसि जुहोत्यादिः । ‘ बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् । निघातः । चेतनः । ‘चिती संज्ञाने' । कर्तरि बहुलवचनाल्ल्युट्। ‘ लिति' इत्याद्युदात्तत्वम् । अया। इदंशब्दस्य तृतीयायाः ‘ सुपां सुलुक्° ' इति याजादेशः । अनादेशप्राप्तौ हलि लोपः । पातम् ।' पा पाने '। निघातः ॥

इन्द्रं॑म॒ग्निं क॑वि॒च्छदा॑ य॒ज्ञस्य॑ जू॒त्या वृ॑णे ।

ता सोम॑स्ये॒ह तृ॑म्पताम् ॥३

इन्द्र॑म् । अ॒ग्निम् । क॒वि॒ऽछदा॑ । य॒ज्ञस्य॑ । जू॒त्या । वृ॒णे॒ ।

ता । सोम॑स्य । इ॒ह । तृ॒म्प॒ता॒म् ॥३

इन्द्रम् । अग्निम् । कविऽछदा । यज्ञस्य । जूत्या । वृणे ।

ता । सोमस्य । इह । तृम्पताम् ॥३

"यज्ञस्य यज्ञसाधनभूतस्य सोमस्य “जूत्या । जूतिः प्रेरणम् सोमस्तावत् यजमानं प्रेरयति । साधनमुपलभ्य तत्साध्यक्रतौ यजमानः प्रवर्तत इति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपया जूत्या प्रेरितोऽहं “कविच्छदा कवीनां स्तोतॄणामुचितफलप्रदानेनोपच्छन्दकौ° “इन्द्रमग्निं च

युवां “वृणे सोमपानार्थमिह कर्मण्यागच्छतमिति संभजे। “ता आगतौ च ताविन्द्राग्नी "इह कर्मणि "सोमस्य सोमपानेन “तृम्पतां तृप्यताम् ॥ इन्द्रम् । इदि परमैश्वर्ये 'इत्यस्माद्धातोः ‘ऋजेन्द्राग्र° ' इति रन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तत्वम् । कविच्छदा ।' छदि अपवारणे'। अस्मात् क्विप् । ‘सुपां सुलुक् ' इति सुपो डादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । जूत्या । ‘ जू' इति सौत्रो धातुः । अस्मात् ‘ °उदात्तः ' इत्यनुवृत्तौ ‘ ऊतियूतिजूति' इत्यादिना निपातनादन्तोदात्तत्वम् । “ उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । वृणे ।' वृङ् संभक्तौ । श्नाप्रत्ययः । ‘ टित आत्मनेपदानाम्° ' इति ‘टेरेत्वम्।। निघातः । ता । ‘ सुपां सुलुक् ' इति डादेशः । सोमस्य । षुञ् अभिषवे'। अस्मात् “ अर्तिस्तुसुहुसृधृक्षि° ' इत्यादिना मन्प्रत्ययः । नित्स्वरः । तृम्पताम् । तृप प्रीणने '। लोटि मुचादित्वान्नुमागमः । निघातः ॥

तो॒शा वृं॒त्र॒हणां हुवे स॒जित्वा॒नापंराजिता ।

इ॒न्द्रा॒ग्नी वांज॒सातंमा ॥४

तो॒शा । वृ॒त्र॒ऽहनां । हु॒वे॒ । स॒ऽजित्वांना । अपंराऽजिता ।

इ॒न्द्रा॒ग्नी इतिं । वा॒ज॒ऽसातंमा ॥४

तोशा । वृत्रऽहना । हुवे । सऽजित्वाना । अपराऽजिता ।

इन्द्राग्नी इति । वाजऽसातमा ॥४

“तोशा शत्रूणां बाधकौ वृत्रहणा वृत्रस्य पापस्य हन्तारौ “सजित्वाना समानजेतारौ “अपराजिता अपराजितौ केनाप्यतिरस्कृतौ “वाजसातमा अन्नस्यातिशयेन दातारौ “इन्द्राग्नी युवां “हुवे इह कर्मणि सोमपानार्थमहमाह्वयामि ॥ वृत्रहणा । ‘ हन हिंसागत्योः । ‘ ब्रह्मभ्रूणवृत्रेषु क्विप्’

इति क्विप् ।' एकाजुत्तरपदे णः ' ( पा. सू. ८. ४. १२ ) इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । हुवे । ह्वयतेः ‘ बहुलं छन्दसि ' इति लुकि सति ‘ह्वः संप्रसारणम्' इत्यनुवृत्तौ ‘ बहुलं छन्दसि ' इति संप्रसारणम् । उवङादेशः । व्यत्ययेनात्मनेपदम् । निघातः । सजित्वाना । ‘ जि जये '। ‘ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः० ' ( उ. सू. ४. ५५३ ) इति क्वनिप् । कित्त्वाद्गुणाभावः । पित्त्वात्तुगागमः । ‘ समानस्य छन्दस्यमूर्ध ' इति समानस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अपराजिता । नञ्समासे ‘ तत्पुरुष तुल्यार्थ° ' इति पूर्वपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । ' देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वे प्राप्ते ‘ नोत्तरपदेऽनुदात्तादौ ' इति प्रतिषेधात्समासस्वरः । वाजसातमा । ' षणु दाने '। अस्मात् ‘जनसनखनक्रमगमः' इति विट् । ‘ विड्वनोरनुनासिकस्यात् ' इत्याकारः । ‘ अतिशायने तमप्' इति तमप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

प्र वां॑मर्चन्त्यु॒क्थिनो॑ नीथा॒विदो॑ जरि॒तार॑ः ।

इन्द्रा॑ग्नी॒ इष॒ आ वृ॑णे ॥५

प्र । वा॒म् । अ॒र्च॒न्ति॒ । उ॒क्थिनः॑ । नी॒थ॒ऽविदः॑ । ज॒रि॒तारः॑ ।

इन्द्रा॑ग्नी॒ इति॑ । इषः॑ । आ । वृ॒णे॒ ॥५

प्र । वाम् । अर्चन्ति । उक्थिनः । नीथऽविदः । जरितारः ।

इन्द्राग्नी इति । इषः । आ । वृणे ॥५

हे “इन्द्राग्नी “उक्थिनः । उक्थं शस्त्रम् । तद्वन्तः शस्त्रिणो होत्रादयः “वां युवां “प्र “अर्चन्ति इह कर्मणि स्तुतिरूपाभिर्वाग्भिः पूजयन्ति । तथा “नीथाविदः स्तोत्राभिज्ञाः सामगानकुशलाः “जरितारः स्तोतार उद्गात्रादयोऽभिलषितफलावाप्तये युवामर्चन्ति । अहमपि

“इषः अन्नस्य लाभार्थमिन्द्राग्नी युवाम् "आ "वृणे सर्वतः संभजे । पूजयामीत्यर्थः । वाम् । युष्मच्छब्दस्य द्वितीयायां पदात्परत्वात् ' युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया ' इत्यादिना वामित्यादेशोऽनुदात्तश्च । अर्चन्ति । ‘ अर्च पूजायाम् । निघातः । उक्थिनः । ‘ वच परिभाषणे '। ‘पातॄतुदिवचिरिचि° ' इति कर्मणि थक्।' वचिस्वपि ' इत्यादिना संप्रसारणम् । उक्थं शस्त्रम् । उक्थं येषां ते । ‘ अत इनिठनौ 'इतीनिः । ‘ यस्य ' इति लोपः । प्रत्ययस्वरः । नीथाविदः । ‘ णीञ् प्रापणे । ‘ हनिकुषिनीरमि° ' इत्यादिना क्थन् । कित्त्वाद्गुणाभावः । ‘ विद ज्ञाने '। ' क्विप् च ' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । आमन्त्रितत्वादाद्युदात्तत्वम्" । वृणे । ‘ वृङ् संभक्तौ ' । निघातः ॥ ॥ ११ ॥

इन्द्रा॑ग्नी नव॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतम् ।

सा॒कमेके॑न॒ कर्म॑णा ॥६

इन्द्रा॑ग्नी॒ इति॑ । न॒व॒तिम् । पुरः॑ । दा॒सऽप॑त्नीः । अ॒धू॒नु॒त॒म् ।

सा॒कम् । एके॑न । कर्म॑णा ॥६

इन्द्राग्नी इति । नवतिम् । पुरः । दासऽपत्नीः । अधूनुतम् ।

साकम् । एकेन । कर्मणा ॥६

हे “इन्द्राग्नी “दासपत्नीः । दासयन्ति उपक्षपयन्ति इति दासा उपक्षपयितारः शत्रवः। ते पतयः पालका यासां ता दासपत्नीः । “नवतिं नवतिसंख्याकाः “पुरः एवंविधाः

शत्रूणां पुरीः “एकेन 'कर्मणा एकेनैवोद्योगेन युवां “साकं सह युगपत् “अधूनुतम् अकम्पयतम् । ताविन्द्राग्नी आह्वयामीति शेषः ॥ नवतिम् । नवानां दशतां नवभावः तिश्च प्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । दासपत्नीः । ‘ दसु उपक्षये '। दासयतीति दासः । पचाद्यजन्तः । चित्त्वादन्तोदात्तः । ते पतयो यासां नित्यं सपत्न्यादिषु दासाच्च ( पा. सू. ४. १. ३५. ग. ) इत्युक्तत्वात् ‘ विभाषा सपूर्वस्य ' इति ङीप् । इकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अधूनुतम् । ‘ धूञ् कम्पने '। लङि स्वादिभ्यः श्नुः । निघातः । एकेन । ‘ इण् गतौ ' । ‘ इणभीकापाशल्यतिमर्चिभ्यः कन्' इति कन् । नित्त्वादाद्युदात्तः ॥

इन्द्रा॑ग्नी॒ अप॑स॒स्पर्युप॒ प्र य॑न्ति धी॒तय॑ः ।

ऋ॒तस्यं प॒थ्या॒३॒ अनुं ॥७

इन्द्रांग्नी॒ इतिं । अपंसः । परिं । उपं । प्र । य॒न्ति॒ । धी॒तयः॑ ।

ऋ॒तस्यं । प॒थ्याः॑ । अनुं ॥७

इन्द्राग्नी इति । अपसः । परि । उप । प्र । यन्ति । धीतयः ।

ऋतस्य । पथ्याः । अनु ॥७

हे “इन्द्राग्नी “धीतयः सोमस्य धातारः पातारो होत्रादयः “ऋतस्य कर्मफलस्य “पथ्याः पथो मार्गान् “अनु लक्षीकृत्य “अपसः अस्माभिः क्रियमाणस्य कर्मणः “परि सर्वतः “उप “प्र “यन्ति समीपे प्रकर्षेण वर्तन्ते । अतः सोमपानार्थं युवामागच्छतमिति भावः । यद्वा । धीतयः स्तुतयः ऋतस्य यज्ञस्य मार्गान् लक्षीकृत्य कर्मणः परितः

प्रवर्तन्ते । अतः स्तोतव्यतया युवामागतमिति ॥ यन्ति । ‘ इण् गतौ ' । यणादेशः । निघातः । धीतयः । ‘ धेट् पाने' इत्यस्मात् कर्तरि ‘क्तिच्क्तौ च संज्ञायाम् ' इति क्तिच् । ‘घुमास्था ' इतीत्वम् । चित्त्वादन्तोदात्तः ॥

इन्द्रा॑ग्नी तवि॒षाणि॑ वां स॒धस्था॑नि॒ प्रया॑ंसि च ।

यु॒वोर॒प्तूर्यँ॑ हि॒तम् ॥८

इन्द्रा॑ग्नी॒ इति॑ । त॒वि॒षाणि॑ । वा॒म् । स॒धऽस्था॑नि । प्रया॑ंसि । च॒ ।

यु॒वोः । अ॒प्ऽतूर्य॑म् । हि॒तम् ॥८

इन्द्राग्नी इति । तविषाणि । वाम् । सधऽस्थानि । प्रयांसि । च ।

युवोः । अप्ऽतूर्यम् । हितम् ॥८

हे “इन्द्राग्नी “वां युवयोः “तविषाणि बलानि “प्रयांसि अन्नानि “च “सधस्थानि परस्परमवियुज्य वर्तन्ते । तथा “अप्तूर्यं वृष्टिद्वारा प्रेरकत्वं “युवोः युवयोरेव “हितं निहितं वर्तते । तस्मात्सोमपानप्रभृतिषु सर्वकर्मसु इन्द्राग्न्योः सहैव वर्तमानत्वमिति भावः ॥ वाम् । षष्ठीद्विवचने वामित्यादेशः । सधस्थानि । ष्ठा गतिनिवृत्तौ । आतोऽनुपसर्गे कः । ‘ सध मादस्थयोश्छन्दसि ' इति सहस्य सधादेशः ॥

इन्द्रा॑ग्नी रोच॒ना दि॒वः परि॒ वाजे॑षु भूषथः ।

तद्वां॑ चेति॒ प्र वी॒र्य॑म् ॥९

इन्द्रा॑ग्नी॒ इति॑ । रो॒च॒ना । दि॒वः । परि॑ । वाजे॑षु । भू॒ष॒थ॒ः ।

तत् । वा॒म् । चे॒ति॒ । प्र । वी॒र्य॑म् ॥९

इन्द्राग्नी इति । रोचना । दिवः । परि । वाजेषु । भूषथः ।

तत् । वाम् । चेति । प्र । वीर्यम् ॥९

हे “इन्द्राग्नी “दिवः “रोचना स्वर्गस्य रोचकौ प्रकाशकौ युवां “वाजेषु संग्रामेषु “परि “भूषथः परितः सर्वतोऽलंकृतौ भवथः । शत्रून्पराजित्य सर्वतो विजयमानौ वर्तेथे । “वां युवयोः “वीर्यं सामर्थ्यमेव “तत् तादृशं संग्रामविजयं “प्र “चेति प्रकर्षेण ज्ञापयति । यद्वा युवां वाजेषु संग्रामेषु परिभूषथः शत्रून्परिभवथः । शेषं पूर्ववत् ॥ रोचना । ' रुच दीप्तौ' इत्यस्य ‘अनुदात्तेतश्च हलादेः' इति युच् । चित्त्वादन्तोदात्तः । भूषथः । ‘ भूष भूषणे' । निघातः । चेति । ‘ चिती संज्ञाने' । अयमन्तर्भावितण्यर्थः । 'बहुलं छन्दसि' इति शपो लुक् । तकारलोपः छान्दसः ॥ ॥ १२ ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं ३.१३



## दे. अग्निः। अनुष्टुप्

प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।

गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥१॥

ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः ।

हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसे ॥२॥

स यन्ता विप्र एषां स यज्ञानामथा हि षः ।

अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥३॥

स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।

यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥४॥

दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।

ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशाम् ॥५॥

उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः ।

शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥६॥

नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु ।

द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥७॥

## सायणभाष्यम्

द्वितीयेऽनुवाके सप्तदश सूक्तानि । तत्र ' प्र वो देवाय ' इति सप्तर्चं प्रथमं सूक्तं वैश्वामित्र-

ऋषभस्यार्षमग्निदेवताकमानुष्टुभम् । तथा चानुक्रातं - प्र वः सप्त ऋषभस्त्वानुष्टुभम् ' इति । विश्वामित्रपुत्र ऋषभ ऋषिः । मण्डलादिपरिभाषयाग्निर्देवता । अग्निष्टोमे इदं सूक्तमाज्यशस्त्रम् । ' पराङध्वर्यावावृत्ते ' इति खण्डे सूत्रितम्-' प्र वो देवायेत्याज्यमुपसंतनुयात् ' (आश्व. श्रौ. ५.९) इति । इदमेव सूक्तं प्रातरनुवाक आश्विनशस्त्रे च विनियुक्तम् । सूत्रं च-' प्र वो देवायाग्ने कदा त इति पञ्च ' ( आश्व. श्रौ. ४. १३) इति । अभ्युदयेष्टौ ' स यन्ता ' इत्यग्नेः प्रदातुः याज्या । सूत्रितं च-'स यन्ता विप्र एषां दीर्घस्ते अस्त्वंकुशः ' ( आश्व. श्रौ. ३.१३) इति । ।

प्र वो॑ दे॒वाया॒ग्नये॒ बर्हि॑ष्ठमर्चास्मै ।

गम॑द्दे॒वेभि॒रा स नो॒ यजि॑ष्ठो ब॒र्हिरा स॑दत् ॥१

प्र । व॒ः । दे॒वाय॑ । अ॒ग्नये॑ । बर्हि॑ष्ठम् । अ॒र्च॒ । अ॒स्मै॒ ।

गम॑त् । दे॒वेभिः॑ । आ । सः । न॒ः । यजि॑ष्ठः । ब॒र्हिः । आ । स॒द॒त् ॥१

प्र । वः । देवाय । अग्नये । बर्हिष्ठम् । अर्च । अस्मै ।

गमत् । देवेभिः । आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥१

यजमानो होत्रादीन्प्रति ब्रूते । हे होत्रादयः “वः युष्मत्संबन्धिने देवाय द्योतमानाय “अस्मै अस्मिन्कर्मणि स्तुत्याय “अग्नये “बर्हिष्ठं वृद्धतमं प्रभूतमिदं स्तुतिरूपं स्तोत्रशस्त्रादि वोक्थ्यजातं ”प्र "अर्च उच्चारयत । एवं स्तुतः “सः अग्निः “देवेभिः यष्टव्यदेवैः सहितः सन् “नः अस्मान्प्रति “आ “गमत् आगच्छतु । आगत्य च “यजिष्ठः यष्टृतमः सोऽग्निः “बर्हिः अस्माभिर्वेद्यां स्तीर्णे बर्हिषि “आ “सदत् आसीदतु उपविशतु ॥ बर्हिष्ठम् । बर्हितृशब्दात् ‘तुश्छन्दसि' इत्यतिशायने इष्ठन् । अर्च। ‘अर्च पूजायाम्'।

भौवादिकः । बहुवचनस्यैकवचनम् । निघातः । गमत् । 'गम्लृ गतौ ' । अस्य छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ । लृदित्वात् च्लेरङ्। ‘ नित्यं ङितः 'इतीकारलोपः। पादादित्वान्न निघातः । यजिष्ठः । यष्टृशब्दात् ‘तुश्छन्दसि' इतीष्ठन् । तुरिष्ठेमेयःसु' इति तृचो लोपः । नित्स्वरः । सदत् । पूर्ववल्लोडर्थे लुङ् । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य लृदित्वादङ्। निघातः ॥

ऋ॒तावा॑ यस्य॒ रोद॑सी॒ दक्षं॒ सच॑न्त ऊ॒तयः॑ ।

ह॒विष्म॑न्त॒स्तमी॑ळते॒ तं स॑नि॒ष्यन्तोऽव॑से ॥२

ऋ॒तऽवा॑ । यस्य॑ । रोद॑सी॒ इति॑ । दक्ष॑म् । सच॑न्ते । ऊ॒तयः॑ ।

ह॒विष्म॑न्तः । तम् । ई॒ळ॒ते॒ । तम् । स॒नि॒ष्यन्तः॑ । अव॑से ॥२

ऋतऽवा । यस्य । रोदसी इति । दक्षम् । सचन्ते । ऊतयः
।

हविष्मन्तः । तम् । ईळते । तम् । सनिष्यन्तः । अवसे ॥२

“यस्य पूर्वमन्त्रे प्रतिपादितस्याग्नेः “रोदसी इमे द्यावापृथिव्यौ वशे भवतः । अग्नेः प्रकाशकत्वेन तदधीनप्रकाशके भवत इत्यर्थः । किंच “ऊतयः यजमानस्य फलप्रदानेन रक्षितारो देवाः “दक्षं यस्याग्नेर्बलं "सचन्ते सेवन्ते । ‘ सचन्ते सेवन्ते ' ( निरु. ७. २३) इति यास्कः । अग्नेर्यजमानदत्तहविष्प्रदत्वेन तदधीना इत्यर्थः । एवंभूतः सोऽग्निः “ऋतावा सत्यकर्मा । सत्यसंकल्प इत्यर्थः । किंच “हविष्मन्तः संभृतहविष्का यजमाना हविर्वहनार्थं “तम् एवाग्निम् “ईळते स्तुतिरूपाभिर्वाग्भिः पूजयन्ति । किंच “सनिष्यन्तः धनादिलाभमिच्छन्तः “तम् अवसे रक्षणाय तमेवाग्निमाश्रयन्ते ॥ ऋतावा ।

ऋतशब्दात् “ तदस्यास्ति' इति छन्दसीवनिपौ वक्तव्यौ' इति वनिप् । अन्येषामपि दृश्यते' इति दीर्घः । वनिपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः। सचन्ते। ‘षच समवाये । व्यत्ययेन आत्मनेपदम् । यद्वृत्तयोगादनिघातः। सनिष्यन्तः । सनिर्लाभः । तमिच्छन्तः । ‘ सुप आत्मनः क्यच् । ‘ सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' इति क्यचि परतः सुगागमः । क्यचः स्वरः ॥

स य॒न्ता विप्रं एषा॒ं स य॒ज्ञाना॒मथा॒ हि षः ।

अ॒ग्निं तं वों दुवस्यत॒ दाता॒ यो वनिंता म॒घम् ॥३

सः । य॒न्ता । विप्रः॑ । ए॒षा॒म् । सः । य॒ज्ञानांम् । अथं । हि । सः ।

अ॒ग्निम् । तम् । व॒ः । दु॒व॒स्य॒त॒ । दाता॑ । यः । वनि॑ता ।
म॒घम् ॥३

सः । यन्ता । विप्रः । एषाम् । सः । यज्ञानाम् । अथ । हि
। सः ।

अग्निम् । तम् । वः । दुवस्यत । दाता । यः । वनिता ।
मघम् ॥३

“विप्रः मेधावी कर्माभिज्ञः “सः अग्निः “एषां कालापराधेन हविर्निर्वापं कृतवतां यजमानानां यथोक्तकर्मप्रदर्शनेन तत्र प्रवर्तकः । “अथ किंच "यज्ञानां ज्योतिष्टोमादीनां “सः अग्निः नियन्ता फलप्रदानेन नियामकः । “हि प्रसिद्धौ । अत एव सर्वस्य नियन्ता खलु । किंच “सः अग्निः “दाता ज्योतिष्टोमादिकर्मफलदाता “मघं मंहनीयं धनम् । ‘ मघं रेक्णः ' (नि. २. १०. १ ) इति तन्नामसु पाठात् । तद्धनं “वनिता प्रयच्छंश्च भवति । "वः युष्मत्संबन्धिनं तं तादृशम्

“अग्निं हे ऋत्विजः यूयं "दुवस्यत आहुतिप्रदानेन परिचरत । दुवस्यतिः परिचरणकर्मा ‘नमस्यति दुवस्यति' (नि. ३. ५. ५) इति तन्नामसु पाठात् ॥ यन्ता । ‘यम उपरमे ' इत्यस्य तृचि रूपम् । ‘ ऋदुशनस्' इत्यादिना अनङादेशः । चित्स्वरः । अथा हि। • निपातस्य ' इति दीर्घः । दुवस्यत । दुवः परिचरणम् । तदिच्छन्तः । सुपः क्यच् । तदन्तस्य धातोर्लोटि रूपम् । दाता । ' डुदाञ् दाने' । ताच्छीलिकस्तृन् । नित्त्वादाद्युदात्तः ॥

स न॒ः शर्मा॑णि वी॒तये॒ऽग्निर्य॑च्छतु॒ शंत॑मा ।

यतो॑ नः प्रु॒ष्णव॒द्वसु॑ दि॒वि क्षि॒तिभ्यो॑ अ॒प्स्वा ॥४

सः । न॒ः । शर्मा॑णि । वी॒तये॑ । अ॒ग्निः । य॒च्छ॒तु॒ । शम्ऽत॑मा ।

यतः॑ । नः॒ । प्रु॒ष्णव॑त् । वसु॑ । दि॒वि । क्षि॒तिऽभ्यः॑ ।
अ॒प्ऽसु । आ ॥४

सः । नः । शर्माणि । वीतये । अग्निः । यच्छतु ।
शम्ऽतमा ।

यतः । नः । प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः ।
अप्ऽसु । आ ॥४

“सः “अग्निः हविष्प्रदातृभ्यः “नः अस्मभ्यं “शंतमा पशुपुत्रादिसमृद्धया अतिशयेन सुखकराणि । शर्मशब्दो गृहवाची ‘ छाया शर्म वर्म' (नि. ३.४.२१) इति तन्नामसु पाठात् । तथाविधानि गृहाणि “वीतये संभजनाय अग्निहोत्रादिकर्मप्राप्त्यर्थं “यच्छतु ददातु । “यतः यस्मादग्नेः सकाशात् “प्रुष्णवत् समृद्धिमत् दानभोगादिना व्यये सत्यपि अतिशयेन वर्धमानं “दिवि द्युलोके “क्षितिभ्यः भूलोकात् "अप्सु अन्तरिक्षे च समुत्पन्नं “वसु

तत्तल्लोके असाधारण्येन वर्तमानं धनम् “आ समन्तात् उपनमति । यतोऽग्नेः प्रसादात् त्रिषु लोकेषु विद्यमानं धनमस्मानागच्छति सोऽग्निरिति पूर्वेणान्वयः॥ वीतये । वी गतिकान्त्यादिषु ।' मन्त्रे वृषेषपच° ' इत्यादिना क्तिन् । उदात्तत्वेन निपातनादुदात्तः । यच्छतु । 'यम उपरमे'। इषुगमियमां छः' इति मकारस्य छः । प्रुष्णवत् । 'पुष स्नेहनसेचनपूरणेषु ' । अस्मादौणादिको नक्प्रत्ययः । तदस्यास्ति' इति मतुप् । तस्योदात्तताभावश्छान्दसः ॥

दी॒दि॒वांस॒मपूं॑र्व्यं॒ वस्वीं॑भिरस्य धी॒तिभिः॑ ।

ऋक्वां॑णो अ॒ग्निमिं॑न्धत॒े होतां॑रं वि॒श्पतिं॑ वि॒शाम् ॥५

दी॒दि॒ऽवांसं॑म् । अपूं॑र्व्यम् । वस्वीं॑भिः । अ॒स्य॒ । धी॒तिऽभिः॑ ।

ऋक्वा॑णः । अ॒ग्निम् । इ॒न्ध॒ते॒ । होता॑रम् । वि॒श्पति॑म् । वि॒शाम् ॥५

दीदिऽवांसम् । अपूर्व्यम् । वस्वीभिः । अस्य । धीतिऽभिः ।

ऋक्वाणः । अग्निम् । इन्धते । होतारम् । विश्पतिम् । विशाम् ॥५

“ऋक्वाणः स्तुतिं कुर्वाणाः शस्त्रिणो होत्रादयः “दीदिवांसं दीप्यमानम् “अपूर्व्यं तेजस्वितया प्रतिक्षणमभिनवं “होतारं देवानामाह्वातारं “विशां “विश्पतिं प्रजानामतिशयेन पालयितारं तम् “अग्नि “वस्वीभिः प्रशस्ताभिः “अस्य “धीतिभिः अग्निविषयस्तुतिलक्षणाभिर्वाग्भिः । यद्वा वस्वीभिर्वसुमद्भिरस्य धीतिभिरेतदुद्देशेन क्रियमाणैः कर्मभिः । “इन्धते दीपयन्ति ।

स्तोत्रकरणहविष्प्रदानादिव्यापारेण समृद्धिं कुर्वन्ति ॥

दीदिवांसम् । दिवु क्रीडादावित्यस्य क्वसौ रूपम् । “तुजादीनाम्' इत्यभ्यासस्य दीर्घः । लोपो व्योर्वलि ' इति वलोपः। वस्वीभिः । वसुशब्दात् व्यत्ययेन ङीन् । नित्स्वरः। धीतिभिः । ‘ धेट् पाने'। ‘क्तिच्क्तौ च संज्ञायाम् ' इति क्तिच् । कित्त्वात् ' घुमास्था° ' इतीत्वम् । चित्स्वरः । ऋक्वाणः । ऋच्शब्दान्मतुबर्थे वनिप् । अयस्मयादित्वाद्भसंज्ञात्वात् कुत्वम् । पदसंज्ञाभावाज्जश्त्वाभावः । इन्धते । ‘ ञिइन्धी दीप्तौ । विशपतिम् ।‘परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम्। विशाम् । ‘सावेकाचः०' इति विभक्तेरुदात्तत्वम् ॥

उ॒त नो॒ ब्रह्मं॑न्नविष उ॒क्थेषुं देव॒हूतं॑मः ।

शं नः॑ शोचा म॒रुद्वृ॒धोऽग्ने॑ सहस्र॒सात॑मः ॥६

उ॒त । न॒ः । ब्रह्म॑न् । अ॒वि॒ष॒ः । उ॒क्थेषु॑ । दे॒व॒ऽहूत॑मः ।

शम् । न॒ः । शो॒च॒ । म॒रुत्ऽवृ॑धः । अग्ने॑ । स॒ह॒स्र॒ऽसात॑मः ॥
६

उत । नः । ब्रह्मन् । अविषः । उक्थेषु । देवऽहूतमः ।

शम् । नः । शोच । मरुत्ऽवृधः । अग्ने । सहस्रऽसातमः ॥
६

“उत अपि च हे “अग्ने “नः यज्ञकारिणोऽस्मान् “ब्रह्मन् ब्रह्मणि अस्माभिः क्रियमाणे स्तोत्रे “अविषः स्तोत्रविषयन्यूनातिरेकदोषो यथा न भवति तथा पालय । किंच “देवहूतमः देवानामाह्वातृतमस्त्वम् “उक्थेषु अस्माभिः क्रियमाणेष्वाज्यप्रउगादिशस्त्रेषु अविषः गोपाय । किंच “मरुद्वृधः मरुद्भिर्वर्धमानः “सहस्रसातमः

सहस्रसंख्याकस्य धनस्यातिशयेन दाता त्वं “नः अस्माकं “शम् ऐहिकमामुष्मिकं च सुखं “शोच दीपय । वर्धयेत्यर्थः ॥ अविषः । अव रक्षणादिषु इत्यस्माल्लेटि ‘सिब्बहुलम्° ' इति सिप् । अस्य आर्धधातुकत्वादिट्। ‘ इतश्च लोपः' इति सिप इकारलोपः । ‘ लेटोऽडाटौ' इत्यडागमः । निघातः । उक्थेषु । ‘वच परिभाषणे ' । अस्मात् कर्मणि ‘पातॄतुदिवचिरिचि°' इत्यादिना थक् । कित्त्वात्संप्रसारणम् । प्रत्ययस्वरः । देवहूतमः । ह्वयतेः क्विप् । ‘बहुलं छन्दसि ' इति संप्रसारणपररूपत्वे । ‘ हलः' इति दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । शोच । शुच दीप्तौ । अयमन्तर्भावितण्यर्थः । निघातः । मरुद्वृधः । ‘ वृधु वर्धने ' । इगुपधलक्षणः कः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । सहस्रसातमः । ‘ षणु दाने ' । अस्य ‘ जनसनखनक्रमगमो विट्' इति विट् ।' विड्वनोरनुनासिकस्य ' इत्याकारः । कृदुत्तरपदप्रकृतिस्वरः ॥

नू नो॑ रास्व स॒हस्र॑वत्तो॒कव॑त्पुष्टि॒मद्वसु॑ ।

द्यु॒मद॑ग्ने सु॒वीर्यं॒ वर्षि॑ष्ठ॒मनु॑पक्षितम् ॥७

नु । नः॒ । रा॒स्व॒ । स॒हस्र॑ऽवत् । तो॒कऽव॑त् । पु॒ष्टि॒ऽमत् ।
वसु॑ ।

द्यु॒ऽमत् । अ॒ग्ने॒ । सु॒ऽवीर्य॑म् । वर्षि॑ष्ठम् । अनु॑पऽक्षितम् ॥
७

नु । नः । रास्व । सहस्रऽवत् । तोकऽवत् । पुष्टिऽमत् ।
वसु ।

द्युऽमत् । अग्ने । सुऽवीर्यम् । वर्षिष्ठम् । अनुपऽक्षितम् ॥
७

अस्मिन् सूक्ते स्तूयमान हे “अग्ने सहस्रवत् सहस्रसंख्योपेतं “तोकवत् पुत्रपौत्रादिसहितं “पुष्टिमत् पोषकृत् । अनेन शरीरस्य क्षीरादिद्वारा बलारोग्यप्रदं गवादिकम् उपलक्ष्यते । “द्युमत् दीप्तिमत् । अनेन रत्नकनकादिकं परिगृह्यते । “सुवीर्यं शोभनसामर्थ्योपेतं तत्तत्कार्येषु व्यवहारयोग्यं वर्षिष्ठम् अतिशयेन वृद्धं प्रभूतमत एव “अनुपक्षितं व्यये क्रियमाणेऽप्यनुपक्षीणम् । एवंभूतं “वसु रत्नकनकपश्वादिलक्षणं धनं "नः अस्मभ्यं “नु क्षिप्रमविलम्बेन “रास्व दत्स्व ॥ नू नः । ‘ ऋचि तुनुघमक्षु' ' इति दीर्घः । रास्व ।' रा दाने ' अस्य लोटि रूपम् । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः । सहस्रवत् । “ मादुपधायाः° ' इति मतुपो वत्वङ् । कर्दमादित्वान्मध्योदात्तः सहस्रशब्दः । पुष्टिमत् । ‘ पुष पुष्टौ ' । अस्मात् क्तिच् । प्रत्ययस्वरेणान्तोदात्तः । ‘ ह्रस्वनुड्भ्याम् ' इति मतुप उदात्तत्वम् । वर्षिष्ठम् । ‘ प्रियस्थिर' इत्यादिना वृद्धस्य' वर्षि इत्यादेशः । नित्स्वरः ।

अनुपक्षितम् । ‘ क्षि क्षये ' इत्यस्य दीर्घाभावान्निष्ठानत्वं न भवति । तत्पुरुषवादव्ययपूर्वपदप्रकृतिस्वरः ॥ ॥ १३ ॥

# ऋग्वेदः सूक्तं ३.१४



## दे. अग्निः ।। त्रिष्टुप्

आ होता मन्द्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः ।

विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥१॥

अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः ।

विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥२॥

द्रवतां त उषसा वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।

यत्सीमञ्जन्ति पूर्व्यं हविर्भिरा वन्धुरेव तस्थतुर्दुरोणे ॥३॥

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।

यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्सूर्यो नॄन् ॥४॥

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।

यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥५॥

त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।

त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥६॥

तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो अध्वरे अकर्म ।

त्वं विश्वस्य सुरथस्य बोधि सर्वं तदग्ने अमृत स्वदेह ॥७॥

## सायणभाष्यम्

' आ होता ' इति सप्तर्चं द्वितीयं सूक्तम् । ' आ होता ' इत्यनुक्रमणिका । ' ऋषभस्तु ' इति तुशब्दप्रयोगादस्यापि

सूक्तस्य ऋषभ ऋषिः । अनुक्तत्वात् त्रिष्टुप् । अग्निर्देवता । एतदादीनि दश सूक्तानि तृतीयाष्टमवर्जितानि प्रातरनुवाके आश्विनशस्त्रे त्रैष्टुभे छन्दसि विनियुक्तानि । 'अथैतस्याः इति खण्डे सूत्रितम्-- आ होतेति दशानां तृतीयाष्टमे उद्धरेदिति त्रैष्टुभम् ' ( आश्व. श्रौ. ४. १३) इति । ।

आ होतां म॒न्द्रो वि॒दथांन्यस्थात्स॒त्यो यज्वां क॒वितंम॒ः स वे॒धाः ।

वि॒द्युद्रंथ॒ः सहंसस्पु॒त्रो अ॒ग्निः शो॒चिष्कें॑शः पृथि॒व्यां पाजों अश्रेत् ॥१

आ । होतां । म॒न्द्रः । वि॒दथांनि । अ॒स्था॒त् । स॒त्यः । यज्वां । क॒विऽतंमः । सः । वे॒धाः ।

वि॒द्युत्ऽरं॑थः । सहं॑सः । पु॒त्रः । अ॒ग्निः । शो॒चिःऽकें॑शः । पृ॒थि॒व्याम् । पाजः॑ । अ॒श्रे॒त् ॥१

आ । होता । मन्द्रः । विदथानि । अस्थात् । सत्यः । यज्वा । कविऽतमः । सः । वेधाः ।

विद्युत्ऽरथः । सहसः । पुत्रः । अग्निः । शोचिःऽकेशः । पृथिव्याम् । पाजः । अश्रेत् ॥१

ऋषभोऽग्निं स्तौति । "होता देवानामाह्वाता "मन्द्रः स्तोतुः मादयिता “सत्यः सत्यकर्मा "कवितमः अतिशयेन मेधावी “यज्वा देवानां यष्टा "वेधाः सर्वस्य जगतो विधाता । एवंविधमहिमोपेतः “सः अग्निः “विदथानि अस्माभिः क्रियमाणान् यज्ञान् “आ “अस्थात् आतिष्ठति प्राप्नोति । किंच “विद्युद्रथः विद्योतमानयानोपेतः “शोचिष्केशः । शोचींषि ज्वालाः केशा यस्य सः । ज्वालामयकेशोपेतः सहसस्पुत्रः बलस्य सूनुः एवंभूतः सः “अग्निः “पृथिव्यां

विस्तीर्णेऽन्तरिक्षे “पाजः तेजः स्वकीयां प्रभाम् "अश्रेत् श्रयते प्रापयति । यद्वा पृथिव्यां भूमौ वर्तमानः पाजो बलं सेवते ॥ मन्द्रः । ‘मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । अस्मात् ‘स्फायितञ्चि°' इत्यादिना रक् । इदित्वात् नुम् । अस्थात् । ष्ठा गतिनिवृत्तौ । छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङ्। • गातिस्था' इति सिचो लोपः । निघातः । यज्वा । ‘ यज देवपूजासंगतिकरणदानेषु' । ' सुयजोर्ङ्वनिप्' इति ङ्वनिप् । तस्य पित्त्वादनुदात्तस्वरे धातुस्वरः। कवितमः । ‘कु शब्दे'। कौति कूयते वा । अच इः ' इति कर्तरि भावे वा इप्रत्ययः । तमपः पित्त्वादनुदात्तत्वे प्रत्ययस्वरः । शोचिष्केशः । ‘ शुच दीप्तौ । ‘ अर्चिशुचिहुसृपिच्छदिच्छर्दिभ्य इसिः' इति इसिः । प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । अश्रेत् । श्रिञ् सेवायाम्' इत्यस्य छन्दसि वर्तमाने लङ्। बहुलं छन्दसि ' इति शपो लुक् । सार्वधातुकगुणः । निघातः ।।

अया॑मि ते॒ नम॑उक्तिं जुषस्व॒ ऋता॑व॒स्तुभ्यं॒ चेत॑ते सहस्वः ।

वि॒द्वाँ आ व॑क्षि वि॒दुषो॒ नि ष॑त्सि॒ मध्य॒ आ ब॒र्हिरू॒तये॑ यजत्र ॥२

अया॑मि । ते॒ । नमः॑ऽउक्तिम् । जु॒ष॒स्व॒ । ऋत॑ऽवः । तुभ्य॑म् । चेत॑ते । स॒ह॒स्व॒ः ।

वि॒द्वान् । आ । व॒क्षि॒ । वि॒दुषः॑ । नि । स॒त्सि॒ । मध्ये॑ । आ । ब॒र्हिः । ऊ॒तये॑ । य॒ज॒त्र॒ ॥२

अयामि । ते । नमःऽउक्तिम् । जुषस्व । ऋतऽवः । तुभ्यम् । चेतते । सहस्वः ।

विद्वान् । आ । वक्षि । विदुषः । नि । सत्सि । मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥२

“ऋतावः । ऋतं सत्यभूतो यज्ञः । तद्वन् हे अग्ने “ते त्वद्विषयां “नमउक्तिं नमस्कारवाक्यम् अहम् “अयामि प्रेरयामि उच्चारयामि । हे “सहस्वः । सहो बलम् । तद्वन्नग्ने “चेतते चेतयित्रे कर्मणः प्रज्ञापकाय “तुभ्यं नमउक्तिः क्रियते । तां “जुषस्व । अस्माभिः क्रियमाणां नमस्कारोक्तिं सेवस्व । किंच "विद्वान् आनुपूर्व्येण देवाह्वानाभिज्ञः “विदुषः कर्माभिज्ञान् “आ “वक्षि आवह। किंच "यजत्र यष्टव्य हे अग्ने “ऊतये अस्माकं रक्षणाय “मध्ये “बर्हिः स्तीर्णस्य बर्हिषो मध्ये “आ “नि “षत्सि आ समन्तान्निषीद ॥ अयामि । इण् गतौ ' भौवादिकः । पादादित्वादनिघातः । जुषस्व । जुषी प्रीतिसेवनयोः '। तुदादिः । लोटि रूपम् । निघातः । चेतते । ‘ चिती संज्ञाने' । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे ततः अन्तोदात्तताभावात् ‘शतुरनुमः' इति विभक्तेरुदात्तताभावः । धातुस्वरः । सहस्वः । सहोऽस्त्यस्येति मतुप् । सकारस्य ‘तसौ मत्वर्थे ' इति

भसंज्ञकत्वात् रुर्न भवति । मादुपधायाः' इति मतुपो वत्वम् ।' उगिदचाम्' इति नुम् । हल्ङ्यादिलोपे नकारस्य ' मतुवसो रुः इति रुत्वम्। आमन्त्रितनिघातः । विदुषः। विद ज्ञाने' इत्येतस्मात् उत्तरस्य शतुः 'विदेः शतुर्वसुः' इति वस्वादेशः । भसंज्ञायां वसोः संप्रसारणम् । प्रत्ययस्वरः । सत्सि । षद्लृ विशरणादिषु । लटि ' बहुलं छन्दसि ' इति शपो लुक् । शित्प्रत्ययपरत्वाभावात् सीदादेशाभावः । ' सदिरप्रतेः ' इति षत्वम्। यजत्र । यज देवपूजादिषु । ' अमिनक्षियजि *इत्यादिना अत्रन्प्रत्ययः ।*
*आमन्त्रितनिघातः ॥*

द्रव॑तां त उ॒षसा॑ वा॒जय॑न्ती॒ अग्ने॒ वात॑स्य प॒थ्या॑भि॒रच्छ॑ ।

यत्सी॑म॒ञ्जन्ति॑ पूर्व्य॑ ह॒विर्भि॒रा व॒न्धुरे॑व तस्थतुर्दुरो॒णे ॥३

द्रवंताम् । ते॒ । उ॒षसां । वा॒जयंन्ती॒ इतिं । अ॒ग्ने॒ । वातंस्य । प॒थ्यांभिः । अच्छं ।

यत् । सी॒म् । अ॒ञ्जन्तिं । पू॒र्व्यम् । ह॒विःऽभिः॑ । आ । व॒न्धुरांऽइव । त॒स्थ॒तुः । दु॒रो॒णे ॥३

द्रवताम् । ते । उषसा । वाजयन्ती इति । अग्ने । वातस्य । पथ्याभिः । अच्छ ।

यत् । सीम् । अञ्जन्ति । पूर्व्यम् । हविःऽभिः । आ । वन्धुराऽइव । तस्थतुः । दुरोणे ॥३

हे “अग्ने “वाजयन्ती वाजमन्नं कुर्वाणे “उषसा उषासानक्ते अहोरात्रौ “ते त्वां “द्रवताम् अभिगच्छताम् । त्वमपि “वातस्य वायोः “पथ्याभिः मार्गैः "अच्छ तावहोरात्रौ शीघ्रमभिगच्छ । "यत यस्मात्कारणात् अहोरात्राग्न्योः परस्पराभिगमनेनान्योन्यसंबन्धस्तस्मादहोरात्रयोः

सायंप्रातःकालयोः “पूर्व्यं पुरातनं त्वामृत्विजः "हविर्भिः आज्यादिभिः “सीं सर्वतः “अञ्जन्ति सिञ्चन्ति । किंच “वन्धुरेव । यथा कूवरस्थान परस्परसंसक्तेषाद्वयोपेतं तद्वत्संसक्तौ तावहोरात्रौ “दुरोणे अस्माकं गृहे अग्निहोत्रादिकर्मसिद्ध्यर्थम् “आ आवृत्य पुनः पुनरावर्तमानौ सन्तौ “तस्थतुः तिष्ठताम् ॥ द्रवताम् । ‘ द्रु गतौ ' इत्यस्य लोटि रूपम् । पथ्याभिः । पथिषु साधव इत्यर्थे ' तत्र साधुः ' ( पा. सू. ४. ४. ९८ ) इति यत् । नस्तद्धिते ' इति टिलोपः । ‘ तित्स्वरितम्' इति स्वरितः । तस्थतुः । तिष्ठतेर्लिट्यतुसि रूपम् । निघातः ॥

मि॒त्रश्च॒ तुभ्यं॒ वरु॑णः सह॒स्वोऽग्ने॒ विश्वे॑ म॒रुतः॑ सु॒म्नमं॑र्चन् ।

यच्छो॒चिषां॑ सहसस्पुत्र॒ तिष्ठां॑ अ॒भि क्षि॒तीः प्र॒थय॒न्सूर्यो॒ नॄन्
॥४

मि॒त्रः । च॒ । तुभ्यं॑म् । वरु॑णः । स॒ह॒स्व॒: । अग्ने॑ । विश्वे॑ ।
म॒रुतः॑ । सु॒म्नम् । अ॒र्च॒न् ।

यत् । शो॒चिषा॑ । स॒ह॒स॒: । पु॒त्र॒ । तिष्ठाः॑ । अ॒भि । क्षि॒तीः ।
प्र॒थयं॑न् । सूर्यः॑ । नॄन् ॥४

मित्रः । च । तुभ्यम् । वरुणः । सहस्वः । अग्ने । विश्वे ।
मरुतः । सुम्नम् । अर्चन् ।

यत् । शोचिषा । सहसः । पुत्र । तिष्ठाः । अभि । क्षितीः ।
प्रथयन् । सूर्यः । नॄन् ॥४

“सहस्वः बलवन् हे “अग्ने “मित्रश्च “वरुणः च मित्रावरुणौ "विश्वे "मरुतः सर्वे देवाश्च "तुभ्यं त्वदर्थं “सुम्नं स्तोत्रम् "अर्चन् वहन्ति । यद्वा सर्वे देवास्तुभ्यं त्वां सुम्नं सुखेनार्चन् पूजयन्ति । “यत् यस्मात् कारणात् "सहसस्पुत्र हे अग्ने “सूर्यः । सुष्ठु अर्यः स्वामी । यद्वा सर्वान्तर्यामितया

सुष्ठु प्रेरकः । यद्वा सूर्यः शोभनवीर्यः । “अभि “क्षितीः । क्षितिशब्दो मनुष्यवाची ‘विशः क्षितयः' (नि. २.३.६) इति तन्नामसु पाठात् । मनुष्यानभिलक्ष्य “नॄन् मार्गप्रदर्शकत्वेन नेतॄन् आत्मनो रश्मीन् “प्रथयन् सर्वतो विस्तारयंस्त्वं “शोचिषा दीप्त्या समानः सन् "तिष्ठाः तिष्ठसि । तस्मादेते देवाः पूजयन्तीति ॥ अर्चन् ।' अर्च पूजयाम्' इत्यस्य लङि रूपम् । अडभावश्छान्दसः । तिष्ठाः । ‘ ष्ठा गतिनिवृत्तौ' इत्यस्य लेटि रूपम् । यद्योगात् अनिघातः । ‘ पाघ्रा ' इत्यादिना तिष्ठादेशस्याद्युदात्तत्वेन निपातनादाद्युदात्तः । सूर्यः । ‘राजसूयसूर्य° ' इति क्यबन्तत्वेन निपातनात् सर्वार्थाः सिद्धा भवन्ति ॥

व॒यं ते॑ अ॒द्य र॑रि॒मा हि काम॑मुत्ता॒नह॑स्ता॒ नम॑सोप॒सद्य॑ ।

यजि॑ष्ठेन॒ मन॑सा यक्षि दे॒वानस्रे॑धता॒ मन्म॑ना॒ विप्रो॑ अग्ने ॥५

व॒यम् । ते॒ । अ॒द्य । र॒रि॒म । हि । कामं॑म् । उ॒त्ता॒नऽहं॑स्ताः । नमं॑सा । उ॒प॒ऽसद्यं॑ ।

यजिं॑ष्ठेन । मनं॑सा । य॒क्षि॒ । दे॒वान् । अस्रें॑धता । मन्मं॑ना । विप्रः॑ । अ॒ग्ने॒ ॥५

वयम् । ते । अद्य । ररिम । हि । कामम् । उत्तानऽहस्ताः । नमसा । उपऽसद्य ।

यजिष्ठेन । मनसा । यक्षि । देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥५

हे “अग्ने “उत्तानहस्ताः हविःस्वीकरणादुत्तानपाणयः “वयं “कामं कमनीयं पुरोडाशादिहविः "ते तुभ्यम् “अद्य इदानीमस्मिन् कर्मणि "ररिम दद्मः । “नमसा नमस्कारेण “उपसद्य प्रसन्नो भूत्वा “यजिष्ठेन यष्टृतमेन यागेच्छावता “मनसा अन्तःकरणेन "देवान् “यक्षि यजनीयान् देवान्

यज पूजय। किंच “विप्रः मेधावी कर्माभिज्ञः त्वम् “अस्त्रेधता अक्षीणेन प्रभूतेन “मन्मना मन्तव्येन स्तोत्रेण देवान् पूजय' ।। अद्य । ‘ सद्यः परुत्परार्यैषमः' इत्यादिना निपातितः । अन्तोदात्तश्च । ररिम । ‘रा दाने ' इत्यस्य वर्तमाने लिटि ‘ परस्मैपदानां णलतुः ' ( पा. सू. ३. ४. ८२ ) इत्यादिना मसो मादेशः ।। क्रादिनियमादिडागमः । अतो लोप इटि च ' इत्याकारलोपः । हियोगादनिघातः । ‘ आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात् प्रत्ययस्वरः । उपसद्य। ' षद्लृ विशरणगत्यवसादनेषु'। अस्य क्त्वा । ‘ समासेऽनञ्पूर्वे क्त्वो ल्यप् ' इति ल्यप् । लित्स्वरः। यक्षि । ‘ यज देवपूजासंगतिकरणदानेषु'। लोटि ‘ बहुलं छन्दसि ' इति शपो लुक् । पत्वकत्वे । सिपो ह्यादेशाभावश्छान्दसः ।। अस्त्रेधंता । स्त्रिधिः क्षयार्थः । तत्पुरुषे ' इति नञ्स्वरः ।।

त्वद्धि पु॑त्र सहसो॒ वि पू॒र्वीर्दे॒वस्य॒ यन्त्यू॒तयो॒ वि वाजाः॑ ।

त्वं दे॑हि सह॒स्रिणं॑ र॒यिं नो॑ऽद्रो॒घेण॒ वच॑सा स॒त्यम॑ग्ने ॥६

त्वत् । हि । पु॒त्र॒ । स॒ह॒सः॒ । वि । पू॒र्वीः । दे॒वस्य॑ । यन्ति॑ ।
ऊ॒तयः॑ । वि । वाजाः॑ ।

त्वम् । दे॒हि॒ । स॒ह॒स्रिण॑म् । र॒यिम् । न॒ः । अ॒द्रो॒घेण॑ ।
वच॑सा । स॒त्यम् । अ॒ग्ने॒ ॥६

त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति ।
ऊतयः । वि । वाजाः ।

त्वम् । देहि । सहस्रिणम् । रयिम् । नः । अद्रोघेण ।
वचसा । सत्यम् । अग्ने ॥६

“सहसः “पुत्र बलस्य पुत्र हे “अग्ने “देवस्य देवनशीलस्य कर्मकरणप्रवृत्तस्य यजमानस्य “त्वत् त्वत्तः सकाशात् "पूर्वीः प्रभूताः “ऊतयः विघ्नपरिहारेण कर्मपरिपालनादिरूपाः रक्षाः “वि “यन्ति “हि विविधं गच्छन्ति खलु। तमिमं यजमानं प्राप्नुवन्ति । तथा “वाजाः अन्नानि “वि यन्ति । एनं यजमानं प्राप्नुवन्ति । किंच हे अग्ने “त्वं “सहस्रिणं सहस्रसंख्याकं “रयिं धनं “नः अस्मभ्यं “देहि । तथा “अद्रोघेण द्रोहरहितेन पापशून्येन “वचसा वाक्येन युक्तं “सत्यं सत्यशीलं सन्मार्गे प्रवर्तमानं पुत्रं च देहि प्रयच्छ” ॥ त्वत् । युमच्छब्दस्य पञ्चम्येकवचने त्वादेशः । ङसेः ‘एकवचनस्य च (पा, सू. ७. १. ३२) इत्यदादेशः । एकादेशस्वरः । पुत्र सहसः । ‘ परमपि छन्दसि ' इति पराङ्गवद्भावात् द्वयोः सर्वानुदात्तत्वम् । देहि । डुदाञ् दाने ' इत्यस्य लोटि ध्वसोरेद्धौ°' इति धातोरेत्वम् अभ्यासलोपश्च । निघातः । अद्रोघेण । 'द्रुह जिघांसायाम् । घञ् । द्रोघः ।

घकारश्छान्दसः । ‘ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।।

तुभ्यं॑ दक्ष कविक्रतो॒ यानी॒मा दे॑व॒ मर्ता॑सो अध्व॒रे अक॑र्म ।

त्वं विश्व॑स्य सु॒रथ॑स्य बोधि॒ सर्वं॒ तद॑ग्ने अमृत स्वदे॒ह ॥७

तुभ्य॑म् । द॒क्ष॒ । क॒वि॒क्र॒तो॒ इति॑ कविऽक्रतो । यानि॑ । इ॒मा । देव॑ । मर्ता॑सः । अ॒ध्व॒रे । अक॑र्म ।

त्वम् । विश्व॑स्य । सु॒ऽरथ॑स्य । बो॒धि॒ । सर्व॑म् । तत् । अ॒ग्ने॒ । अ॒मृ॒त॒ । स्व॒द॒ । इ॒ह ॥७

तुभ्यम् । दक्ष । कविक्रतो इति कविऽक्रतो । यानि । इमा । देव । मर्तासः । अध्वरे । अकर्म ।

त्वम् । विश्वस्य । सुऽरथस्य । बोधि । सर्वम् । तत् । अग्ने । अमृत । स्वद । इह ॥७

“दक्ष समृद्धतया सामर्थ्योपेत “कविक्रतो अतीन्द्रियविषयप्रज्ञोपेत सर्वज्ञ “देव दीप्यमान हे अग्ने “मर्तासः यजमाना वयं “तुभ्यं त्वदर्थं “यानीमा यानि इमा इमानि हवींषि “अध्वरे यज्ञे “अकर्म हविस्त्यागमकार्ष्म । “त्वं च “सुरथस्य शोभनयानोपेतस्य “विश्वस्य सर्वस्य यजमानस्य “बोधि गोपायिता भवामीति बुध्यस्व । हे “अमृत मरणधर्मरहित “अग्ने “इह अस्मिन्कर्मणि अस्माभिः दत्तं “तत् “सर्वं हविः “स्वद आस्वादय ॥ अकर्म। डुकृञ् करणे' इत्यस्य लङि ‘छन्दस्युभयथा' इति मस आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः । यद्वृत्तयोगादनिघातः । बोधि । ‘बुध अवगमने'। ‘छन्दसि लुङ' इति लोडर्थे लुङ् । ‘ तिङा तिङो भवन्ति इति सिपस्तादेशः । ‘ दीपजनबुध° । इत्यादिना कर्तरि चिण् । '

चिणो लुक् ' इति तप्रत्ययस्य लोपः । अडभावश्छान्दसः । स्वद । स्वद आस्वादने । अन्तर्भावितण्यर्थः । लोटि रूपम् । निघातः ॥ ॥ १४ ॥

# ऋग्वेदः सूक्तं ३.१५

ऋग्वेदः - मण्डल ३
← सूक्तं ३.१४
सूक्तं ३.१५
कात्य उत्कीलः
सूक्तं ३.१६ →

## दे. अग्निः। त्रिष्टुप्

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।

सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥१॥

त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः ।

जन्मेव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥२॥

त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।

वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥३॥

अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।

यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥४॥

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः ।

रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥५॥

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।

देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥६॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥७॥

## सायणभाष्यम्

‘वि पाजसा पृथुना' इति सप्तर्चं तृतीयं सूक्तं कतगोत्रोत्पन्नोत्कीलस्यार्षं त्रैष्टुभमाग्नेयम् । अत्र

इयमनुक्रमणिका-वि पाजसा कात्य उत्कीलस्तु ' इति । कतगोत्रोत्पन्न उत्कीलो नाम ऋषिः । प्रातरनुवाकाश्विनशस्त्रयोः ‘ आहोता' इत्यादिसूक्तदशकं विनियुक्तं तत्रेदं च द्वितीयं सूक्तम् ।।

वि पाज॑सा पृ॒थुना॒ शोशु॑चानो॒ बाध॑स्व द्वि॒षो र॒क्षसो॒ अमी॑वाः ।

सु॒शर्म॑णो बृह॒तः शर्म॑णि स्याम॒ग्नेर॒हं सु॒हव॑स्य॒ प्रणी॑तौ ॥१

वि । पाज॑सा । पृ॒थुना॑ । शोशु॑चानः । बाध॑स्व । द्वि॒षः । र॒क्षसः॑ । अमी॑वाः ।

सु॒ऽशर्म॑णः । बृ॒ह॒तः । शर्म॑णि । स्या॒म् । अ॒ग्नेः । अ॒हम् । सु॒ऽहव॑स्य । प्रऽनी॑तौ ॥१

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ।

सुऽशर्मणः । बृहतः । शर्मणि । स्याम् । अग्नेः । अहम् । सुऽहवस्य । प्रऽनीतौ ॥१

उत्कीलः स्तौति । हे अग्ने "पृथुना विस्तीर्णेन "पाजसा तेजसा "शोशुचानः अत्यर्थं दीप्यमानस्त्वं "द्विषः कर्मानुष्ठानविघ्नकारिणः शत्रून् "वि "बाधस्व विशेषेण नाशय । तथा "अमीवाः रोगराहित्येन सामर्थ्योपेतानि "रक्षसः । उभयत्र सुब्व्यत्ययः । तानि रक्षांसि बाधस्व । कर्मविघ्नकारीणि तान्यपनुदस्व । यद्वा अमीवाः आभिमुख्येनागमनपरागमनपराः पिशाचिकाश्च बाधस्व। "सुशर्मणः स्वर्गादिलक्षणशोभनसुखहेतोः "बृहतः महतः शत्रुविजयेन प्राप्तमहिम्नः "सुहवस्य सुष्ठ्वाह्वानोपेतस्य "अग्नेः "शर्मणि अस्माकं सुखहेतौ "प्रणीतौ

# ऋग्वेदः सूक्तं ३.३२

← सूक्तं ३.३१

ऋग्वेदः - मण्डल ३

सूक्तं ३.३२

गाथिनो विश्वामित्रः

सूक्तं ३.३३ →

## दे. इन्द्रः। त्रिष्टुप्

इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते ।

प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह मादयस्व ॥१॥

गवाशिरं मन्थिनमिन्द्र शुक्रं पिबा सोमं ररिमा ते मदाय ।

ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व ॥२॥

ये ते शुष्मं ये तविषीमवर्धन्नर्चन्त इन्द्र मरुतस्त ओजः ।

माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥३॥

त इन्न्वस्य मधुमद्विविप्र इन्द्रस्य शर्धो मरुतो य आसन् ।

येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥४॥

मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।

स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥५॥

त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ ।

शयानमिन्द्र चरता वधेन वव्रिवांसं परि देवीरदेवम् ॥६॥

यजाम इन्नमसा वृद्धमिन्द्रं बृहन्तमृष्वमजरं युवानम् ।

यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥७॥

इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।

दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥८॥

अद्रोघ सत्यं तव तन्महित्वं सद्यो यज्जातो अपिबो ह सोमम् ।

न द्याव इन्द्र तवसस्त ओजो नाहा न मासाः शरदो वरन्त ॥९॥

त्वं सद्यो अपिबो जात इन्द्र मदाय सोमं परमे व्योमन् ।

यद्ध द्यावापृथिवी आविवेशीरथाभवः पूर्व्यः कारुधायाः ॥१०॥

अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान् ।

न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः ॥११॥

यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः ।

यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥१२॥

यज्ञेनेन्द्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्याम् ।

य स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥१३॥

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।

अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥१४॥

आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।

समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥१५॥

न त्वा गभीरः पुरुहूत सिन्धुर्नाद्रयः परि षन्तो वरन्त ।

इत्था सखिभ्य इषितो यदिन्द्रा दृळ्हं चिदरुजो गव्यमूर्वम् ॥१६॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।

शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥१७॥

## सायणभाष्यम्

‘इन्द्र सोमं सोमपते ' इति सप्तदशर्चं तृतीयं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च-- ‘इन्द्र सोमं त्र्यूना' इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि मरुत्वतीये ‘इन्द्र सोमम्' इतीदं सूक्तं निविद्धानीयम् । द्वितीयस्य' इति खण्डे सूत्रितम्- इन्द्र सोमं या त ऊतिरवमेति मध्यंदिनः ' ( आश्व. श्रौ. ७. ६.४ ) इति । गोसवविवधयोरपि मरुत्वतीयशस्त्र एतत्सूक्तम् । सूत्रितं च− इन्द्र सोममेतयामेति मध्यंदिनः' ( आश्व. श्रौ. ९.८ ) इति । उद्भिद्बलभिदोरपि मरुत्वतीय एतत्सूक्तम् । सूत्रितं च -- इन्द्र सोममिन्द्रः पूर्भिदिति मध्यंदिनः ' ( आश्व. श्रौ. ९.८ ) इति ॥

इंद्र॒ सोमं॑ सोमपते॒ पिबे॒मं माध्यं॑दिनं॒ सवं॑नं॒ चारु॒ यत्ते॑ ।

प्र॒प्रुथ्या॒ शिप्रे॑ मघवन्नृजीषिन्वि॒मुच्या॒ हरी॑ इ॒ह मां॑दयस्व ॥१

इन्द्रं॑ । सोमं॑म् । सो॒म॒ऽप॒ते॒ । पिबं॑ । इ॒मम् । माध्यं॑न्दिनम् ।
सवं॑नम् । चारुं॑ । यत् । ते॒ ।

प्र॒ऽप्रुथ्यं॑ । शिप्रे॒ इतिं॑ । म॒घ॒ऽव॒न् । ऋ॒जी॒षि॒न् । वि॒ऽमुच्यं॑ ।
हरी॒ इतिं॑ । इ॒ह । मा॒द॒य॒स्व॒ ॥१

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यन्दिनम् ।
सवनम् । चारु । यत् । ते ।

प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य ।
हरी इति । इह । मादयस्व ॥१

विश्वामित्रो ब्रूते । "सोमपते सोमस्याधिपते हे “इन्द्र "इमम् अस्माभिर्माध्यंदिने सवने क्रियमाणं “सोमं सोमरसं “पिब । "यत् यस्मात् "ते त्वदर्थं क्रियमाणं "माध्यंदिनं मध्यंदिनसंबन्धि "सवनं निष्केवल्याख्यं शस्त्रं “चारु रमणीयं वर्तते । "मघवन् धनवन् "ऋजीषिन् । ऋजीषशब्देन गतसारं सोमद्रव्यमुच्यते । तद्वन हे इन्द्र "हरी रथे योजितावश्वौ रथात् विमुच्य “शिप्रे हनू “प्रप्रुथ्य अत्रत्येन ग्रासेन पूरयित्वा “इह देवयजनदेशे "मादयस्व तावश्वौ हर्षय ॥ प्रप्रुथ्य। प्रोथृ पर्याप्तौ' इत्यस्य ल्यपि रूपम् । ह्रस्वछन्दसः । लित्स्वरः । ऋजीषिन् । अर्ज षर्ज अर्जने इत्यस्मात् ‘अर्जेश्च ऋजि च ' ( उ. सू. ४.४६८) इतीषन्प्रत्ययः ऋजि इत्यादेशश्च धातोः । अर्ज्यत इत्यृजीषम् । तदस्यास्ति इति इनिप्रत्ययः । आमन्त्रितत्वान्निघातः । मादयस्व । मदि स्तुत्यादिषु । हेतुमण्णिच् । निघातः ॥

गवा॑शिरं म॒ंथिन॑मिंद्र शु॒क्रं पिबा॒ सोम॑ ररि॒मा ते॒ मदा॑य ।

ब्र॒ह्म॒कृता॒ मारु॑तेना ग॒णेन॑ स॒जोषा॑ रु॒द्रैस्तृ॒पदा वृ॑षस्व ॥२

गोऽआ॑शिरम् । म॒न्थिन॑म् । इ॒न्द्र॒ । शु॒क्रम् । पिब॑ । सोम॑म् । र॒रि॒म । ते॒ । मदा॑य ।

ब्र॒ह्म॒ऽकृता॑ । मारु॑तेन । ग॒णेन॑ । स॒ऽजोषा॑ः । रु॒द्रैः । तृ॒पत् । आ । वृ॒ष॒स्व॒ ॥२

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् । ररिम । ते । मदाय ।

ब्रह्मऽकृता । मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥२

हे "इन्द्र "गवाशिरं गव्यस्य पयस आशीर्मिश्रणं यस्मिन् तं "सोमम् । अपि च "मन्थिनं मन्थसंयुक्तं "शुक्रम् अभिनवं यद्वा शुक्रामन्थिग्रहे वर्तमानम् । एवं त्रिषु सवनेषु वर्तमानमिमं सोमं "पिब । “ते तव "मदाय हर्षाय “ररिम तं सोमं वयं प्रयच्छामः । "मारुतेन । मरुतां गणो मारुतः । स च ब्रह्मकृत् । ब्रह्म स्तोत्रं करोतीति ब्रह्मकृत् । इन्द्रस्तोत्रं कुर्वाणेन मारुतेन "गणेन "रुद्रैः एकादशसंख्याकैः रुद्रैश्च "सजोषाः संगतस्त्वं तृपत् सोमपानेन तृप्यन् “आ “वृषस्व । तमिमं सर्वतो जठरे सिञ्च धारय ॥ गवाशिरं । श्रीणातेः आङ्पूर्वात् क्विपि 'अपस्पृधेथामानृचुः' इत्यादिना निपातनात् आशिरादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । पिबा" । ‘द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । ररिम । रातेः छान्दसे' वर्तमाने लिटि रूपम् । असमानवाक्यत्वान्निघाताभावः। आगमा अनुदात्ताः इति इटोऽनुदात्तत्वात् प्रत्ययस्वरः । तृपत् । 'तृप प्रीणने' ।

तुदादिः । आगमानुशासनस्यानित्यत्वात् नुमभावः ।
वृषस्व । वृषु सेचने ' । व्यत्ययेन शः ॥

ये त॒े शुष्मं॒ ये तवि॑षी॒मव॑र्ध॒न्नर्चं॑त इंद्र म॒रुतं॑स्त॒ ओजः॑ ।

माध्यं॑दिने॒ सव॑ने वज्रहस्त॒ पिबा॑ रु॒द्रेभिः॒ सग॑णः सुशिप्र ॥
३

ये । त॒े । शुष्मं॑म् । ये । तवि॑षीम् । अव॑र्धन् । अर्च॑न्तः ।
इ॒न्द्र॒ । म॒रुतः॑ । त॒े । ओजः॑ ।

माध्यं॑न्दिने । सव॑ने । व॒ज्र॒ऽह॒स्त॒ । पिब॑ । रु॒द्रेभिः॑ ।
सऽग॑णः । सु॒ऽशि॒प्र॒ ॥३

ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः ।
इन्द्र । मरुतः । ते । ओजः ।

माध्यन्दिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः ।
सऽगणः । सुऽशिप्र ॥३

हे “इन्द्र "ये “मरुतः “ते तव “शुष्मं शत्रूणां शोषकं तेजः "ये च मरुतः "तविषीं बलं च “अवर्धन् युद्धसहकारितयावर्धयन् ते मरुतः "अर्चन्तः त्वां स्तुवन्तः सन्तः “ते तव “ओजः युद्धसामर्थ्यम् अवर्धयन् । “वज्रहस्त वज्रयुक्तः हस्तः यस्येति तादृश “सुशिप्र शोभनहनो। शिप्रे हनू नासिके वा' इति यास्कः । हे इन्द्र “रुद्रेभिः । रोदयन्ति शत्रूनिति रुद्राः मरुतः । तैः “सगणः त्वं “माध्यंदिने "सवने सोमं “पिब ॥ अवर्धन् । 'वृधु वर्धने' । अन्तर्भावितण्यर्थः । यद्वृत्तयोगादनिघातः । माध्यंदिने । उत्सादित्वादञ् । ञित्त्वादाद्युदात्तः ॥

त इन्न्वंस्य मधुंमद्विविप्र इंद्रंस्य शर्धो मरुतो य आसंन् ।

येभि॑र्वृ॒त्रस्ये॑षि॒तो वि॒वेदा॑म॒र्मणो॒ मन्य॑मानस्य॒ मर्म॑ ॥४

ते । इत् । नु । अ॒स्य॒ । मधु॑ऽमत् । वि॒वि॒प्रे॒ । इन्द्र॑स्य । शर्धः॑ । म॒रुतः॑ । ये । आस॑न् ।

येभिः॑ । वृ॒त्रस्य॑ । इ॒षि॒तः । वि॒वेद॑ । अ॒म॒र्मणः॑ । मन्य॑मानस्य । मर्म॑ ॥४

ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इन्द्रस्य । शर्धः । मरुतः । ये । आसन् ।

येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः । मन्यमानस्य । मर्म ॥४

“ये "मरुतः “इन्द्रस्य “शर्धः बलभूताः “आसन् "ते “इत् त एव मरुतः “अस्य । द्वितीयार्थे षष्ठी । इममिन्द्रं “मधुमत् । तव सहाया वयमास्महे त्वं युद्धमभिगच्छेति माधुर्योपेतं वाक्यं यथा भवति तथा “विविप्रे “नु क्षिप्रं प्रैरयन् । “येभिः

यैर्युद्धसहायैर्मरुद्भिः “इषितः प्रेरित इन्द्रः “अमर्मणः परैः अविदितमर्मस्थानस्य अत एव “मन्यमानस्य न कोऽपि मम हन्तेत्यभिमन्यमानस्य “वृत्रस्य असुरस्य “मर्म यस्मिन् स्थाने प्रहृतौ सत्यां स मरिष्यति तादृशं स्थानं “विवेद अज्ञासीत् ॥ विविप्रे । ‘ विप क्षेपणे ' इत्यस्य लिटि व्यत्ययेनात्मनेपदम् । इरेचः • इरयो रे' इति रे इत्यादेशः । निघातः॥ आसन् ।' अस भुवि ' इत्यस्य लङि रूपम् । यद्वृत्तयोगान्निघाताभावः । विवेद । ‘ विद ज्ञाने इत्यस्य लिटि रूपम् । लित्स्वरः । मर्म ।' मृङ् प्राणत्यागे ' इत्यस्मादौणादिको मनिन् । नित्स्वरः ॥

म॒नु॒ष्वदि॑न्द्र॒ सव॑नं जुषा॒णः पिबा॒ सोम॒ं शश्व॑ते वी॒र्या॑य ।

स आ व॑वृत्स्व हर्यश्व य॒ज्ञैः स॑र॒ण्युभि॑र॒पो अर्णा॑ सिसर्षि ॥ ५

म॒नु॒ष्वत् । इ॒न्द्र॒ । सव॑नम् । जु॒षा॒णः । पिब॑ । सोम॑म् । शश्व॑ते । वी॒र्या॑य ।

सः । आ । व॒वृ॒त्स्व॒ । ह॒रि॒ऽअ॒श्व॒ । य॒ज्ञैः । स॒र॒ण्युऽभिः॑ । अ॒पः । अर्णा॑ । सि॒स॒र्षि॒ ॥५

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते । वीर्याय ।

सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥५

हे “इन्द्र "मनुष्वत् मनोर्यज्ञमिव ममेदं “सवनं यज्ञं “जुषाणः सेवमानस्त्वं “शश्वते शाश्वताय “वीर्याय परपरिभवलक्षणाय सामर्थ्यायेमं "सोमं “पिब । हे “हर्यश्व हरितवर्णाश्वोपेत “सः तादृशस्त्वं “यज्ञैः यजनीयैः मरुद्भिः साकम् "आ “ववृत्स्व आगच्छ । किंच “सरण्युभिः

एकश्रुतिमन्मन्त्रानात्मन इच्छद्भिः यद्वा सरण्युभिः सरणशीलैर्मरुद्भिः सहितस्त्वम् “अपः अन्तरिक्षस्थितान्युदकानि “अर्णा पार्थिवान्युदकानि “सिसर्षि प्रापय । यद्वा अपः । पञ्चम्यन्तमेतत्पदम् । अपो व्याप्तादन्तरिक्षात् सकाशात् अर्णांसि प्रापय ॥ ववृत्स्व । ‘ वृतु वर्तने ' । व्यत्ययेन शपः श्लुः । लोटि रूपम् । सरण्युभिः । रण शब्दार्थः । क्विप् । समानो रणो ध्वनिर्येषां ते सरणा मन्त्राः । तानिच्छन्तः । सुपः क्यच् । 'क्यात् इति उप्रत्ययः । यद्वा ‘ सृ गतौ '।' सृयुवचिभ्योऽन्युजागूजक्नुचः' (उ, सू. ३.३६१) इत्यन्युच्प्रत्ययः । ‘रषाभ्याम् ' (पा. सू. ८. ४. १ ) इति णत्वम् । चित्त्वादन्तोदात्तः । अपः । ‘ आप्लृ व्याप्तौ । आप्नोतेः क्विप् ह्रस्वश्च' इति क्विप् धातोर्ह्रस्वश्च । ‘सावेकाचः' इति विभक्तेरुदात्तत्वम् । सिसर्षि । 'सृ गतौ । छान्दसो जुहोत्यादिः । ‘ बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् ॥ ॥ ९ ॥

त्वम॒पो यद्धं वृ॒त्रं जंघ॒न्वाँ अत्याँ इव॒ प्रासृंज॒ः सर्त॒वाजौ ।

शयांनमिंद्र॒ चरंता व॒धेनं वव्रि॒वांस॒ं परिं दे॒वीरदेंवं ॥६

त्वम् । अ॒पः । यत् । ह॒ । वृ॒त्रम् । ज॒घ॒न्वान् । अत्यांन्ऽइव । प्र । असृंजः । सर्त॒वै । आ॒जौ ।

शयांनम् । इ॒न्द्र॒ । चरंता । व॒धेनं । व॒व्रि॒ऽवांसंम् । परिं । दे॒वीः । अदेंवम् ॥६

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव । प्र । असृजः । सर्तवै । आजौ ।

शयानम् । इन्द्र । चरता । वधेन । वव्रिऽवांसम् । परि । देवीः । अदेवम् ॥६

हे “इन्द्र “त्वं “देवीः देवनशीलाः "अपः “परि “वव्रिवांसं परित आवृत्य वर्तमानमत एव “अदेवं बहूदकतयास्वच्छत्वेनाप्रतिभासमानं “शयानम् एकत्र निश्चलतया वर्तमानं “वृत्रं मेघं “यत् यदा “चरता तमुद्दिश्य वर्तमानेन "वधेन युद्धेन "जघन्वान् हतवानसि तदा त्वम् "आजौ युद्धे “सर्तवै अतिवेगगमनाय “अत्यानिव यथाश्वान् प्रेरयसि तथा त्वमपः उदकान्यन्तरिक्षादाकाशात् “प्रासृजः "ह प्रकर्षेण मेघभेदनं कृत्वासृजः खलु । तं यजाम इत्युत्तरेणान्वयः ॥

जघन्वान् । ‘हन हिंसागत्योः ' इत्यस्य क्वसौ ' विभाषा गमहनविदविशाम् ' इतीटो विकल्पिततत्वादत्र इडभावः । ‘ अभ्यासाच्च इति हकारस्य घत्वम् । प्रत्ययस्वरः । असृजः । ‘ सृज विसर्गे '। शविकरणी । यद्योगादनिघातः । सर्तवै । ' सृ गतौ' । तुमर्थे तवैप्रत्ययः । ‘ अन्तश्च तवै युगपत् ' इति धातोः प्रत्ययस्य चोदात्तत्वम् । आजौ ।' अज गतिक्षेपणयोः' । 'अज्यतिभ्यां च ' ( उ. सू . ४, ५७०) इति

इणप्रत्ययः । णित्त्वादुपधावृद्धिः । अजन्ति गच्छन्त्यस्मिन्नित्याजिर्युद्धम् । प्रत्ययस्वरः। सर्तवाजावित्यत्र संहितायाम् आयादेशे कृते तस्य लोपः शाकल्यस्य' इति यकारलोपः । सर्वविधीनां छन्दसि विकल्पितत्वात् सवर्णदीर्घत्वे कर्तव्ये यलोपो नासिद्धो भवति । सवर्णदीर्घः। शयानम् । ' शीङ स्वप्ने' । शानच् । अदादित्वाच्छपो लुक् । ङित्त्वाल्लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः । वधेन । हन्तेर्भावे ' हनश्च वधः' इत्यप्प्रत्ययो वधादेशश्च धातोरन्तोदात्तश्च । वव्रिवांसम्। ' वृञ् वरणे ' इत्यस्य क्वसौ इडागमश्छान्दसः । प्रत्ययस्वरः ॥

यजा॑म॒ इन्नम॑सा वृ॒द्धमिंद्रं॑ बृ॒हंतं॑मृ॒ष्वम॒जरं॒ युवा॑नं ।

यस्यं॑ प्रि॒ये म॒मतुं॑र्य॒ज्ञियं॑स्य॒ न रोदं॑सी महि॒मानं॑ म॒माते॑ ॥७

यजा॑मः । इत् । नम॑सा । वृ॒द्धम् । इन्द्र॑म् । बृ॒हन्त॑म् । ऋ॒ष्वम् । अ॒जर॑म् । युवा॑नम् ।

यस्य॑ । प्रि॒ये इति॑ । म॒मतुः॑ । य॒ज्ञिय॑स्य । न । रोद॑सी॒ इति॑ । म॒हि॒मान॑म् । म॒माते॒ इति॑ ॥७

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् ।

यस्य । प्रिये इति । ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानम् । ममाते इति ॥७

"नमसा हविर्लक्षणेनान्नेन “वृद्धं प्रवृद्धम् अत एव “बृहन्तं महान्तम् 'ऋष्वम् । ऋष्यते गम्यते स्तुतिलक्षणैर्मन्त्रैरिति ऋष्वं स्तोतव्यम् । “अजरं जरारहितम् अत एव “युवानं नित्यतरुणम् एवंविधम् “इन्द्रं “यजाम “इत् । कुशिका वयं यज्ञसिद्ध्यर्थं स्तुतिवाक्यैः पूजयामः । “प्रिये प्रियतमे

अपरिमिते "रोदसी द्यावापृथिव्यौ "यज्ञियस्य यज्ञार्हस्य "यस्य इन्द्रस्य तव "महिमानं वैभवं "न "ममतुः न परिच्छेत्तुं शक्नुतः । न "ममाते इति द्वितीयं क्रियापदमादरार्थम् ॥ यजामः । यजेर्लटि रूपम् । ऋष्वम् । ' ऋषी गतौ'। ' सर्व निघृष्वऋष्व' ' इत्यादिना वप्रत्ययान्तो निपातितः । प्रत्ययस्वरः । प्रिये । ' ईदूदेत्' इति प्रगृह्यसंज्ञा । ममतुः । ' मा माने ' इत्यस्य लिट्यतुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । महिमानम् । महिशब्दात् तस्य भावः इत्यर्थे पृथ्वादिदित्विवामनिच् । चित्स्वरः । ममाते । 'माङ् माने शब्दे च ' इत्यस्य लिट्याताामि रूपम् ॥

इंद्रं॑स्य॒ कर्म॒ सुकृ॑ता पु॒रूणि॑ व्र॒तानि॑ दे॒वा न मि॑नंति॒ विश्वे॑ ।

दा॒धार॒ यः पृ॑थि॒वीं द्यामु॒तेमां ज॒जान॒ सूर्य॑मु॒षसं॑ सु॒दंसाः॑ ॥८

इन्द्र॑स्य । कर्म॑ । सुऽकृ॑ता । पु॒रूणि॑ । व्र॒तानि॑ । दे॒वाः । न । मि॒न॒न्ति॒ । विश्वे॑ ।

दा॒धार॑ । यः । पृ॒थि॒वीम् । द्याम् । उ॒त । इ॒माम् । ज॒जान॑ । सूर्य॑म् । उ॒षस॑म् । सु॒ऽदंसाः॑ ॥८

इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मिनन्ति । विश्वे ।

दाधार । यः । पृथिवीम् । द्याम् । उत । इमाम् । जजान । सूर्यम् । उषसम् । सुऽदंसाः ॥८

“विश्वे सर्वे “देवाः “इन्द्रस्य तव "कर्म कर्माणि “सुकृता सुकृतानि सुष्ठु निर्मितानि पृथिव्यादीनि “पुरूणि बहूनि “व्रतानि यज्ञादीनि च “न “मिनन्ति । एतानि सर्वाणि तव कर्माणि न हिंसन्ति । किंत्वाद्रियन्ते । किंच “यः अयमिन्द्रः “पृथिवीं भूलोकं “द्यां द्युलोकम् “उत अपि च

“इमाम् इममन्तरिक्षलोकं च एतांस्त्रीन् लोकान् “दाधार । 'सुदंसाः सुकर्मा शोभनकर्मा सन्निन्द्रः “सूर्यं लोकप्रकाशकमादित्यम् “उषसम् अग्निहोत्रादिकर्मनिर्वाहकमुष:कालं “जजान उत्पादयामास । ‘ इन्द्रस्य कर्म सुकृता पुरूणि ' इत्येतत्पदकदम्बकम् ‘ एको द्वे वसुमती' इत्यस्मिन् वर्गे पठितम् (ऋ. सं. ३.३०, १३)। अत्रापि तदेव पठ्यते किमिति पदकाले नोत्सृज्यत इति चेन्न । वाक्यभेदात् । तत्र ‘इन्द्रस्य कर्म सुकृता पुरूणि ' इत्येकं वाक्यम् । अत्र तु ' कर्म सुकृता ' इत्येकं वाक्यं पुरूणि व्रतानि ' इत्यपरम् । किंच तत्रत्यं पदकदम्बकं प्रथमान्तम् अत्रत्यं द्वितीयान्तम् । अतो वाक्यभेदात् विभक्तिभेदाच्च पदकाले नोत्सृज्यते ।। मिनन्ति । 'मीञ् हिंसायाम्' इत्यस्य लटि रूपम् । निघातः । दाधार । ‘ धृञ् धारणे ' इत्यस्य लिटि रूपम् । तुजादित्वात् अभ्यासस्य दीर्घः । लित्स्वरः । जजान । जन जनने '

इत्यस्यान्तर्भावितण्यर्थस्य लिटि रूपम् । लित्स्वरः । सुदंसाः । ‘ सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् ।।

अद्रोघ स॒त्यं तव॒ तन्मंहि॒त्वं स॒द्यो यज्जा॒तो अपिंबो ह॒ सोमं ।

न द्याव इंद्र त॒वसंस्त॒ ओजो॒ नाहा॒ न मासाः श॒रदों वरंत ॥ ९

अद्रोंघ । स॒त्यम् । तवं । तत् । म॒हि॒ऽत्वम् । स॒द्यः । यत् । जा॒तः । अपिंबः । ह॒ । सोमंम् ।

न । द्यावः । इ॒न्द्र॒ । त॒वसः । ते॒ । ओजः । न । अहा । न । मासाः । श॒रदः । व॒र॒न्त॒ ॥९

अद्रोघ । सत्यम् । तव । तत् । महिऽत्वम् । सद्यः । यत् । जातः । अपिबः । ह । सोमम् ।

न । द्यावः । इन्द्र । तवसः । ते । ओजः । न । अहा । न । मासाः । शरदः । वरन्त ॥९

“अद्रोघ द्रोहवर्जित हे इन्द्र “तव “तन्महित्वं तादृशं माहात्म्यं “सत्यं यथार्थम् । “यत् यस्मात् “जातः उत्पन्नः “सद्यः तदानीमेव “सोमम् अस्माभिर्दीयमानं सोमरसम् “अपिबः । “ह प्रसिद्धौ । किंच “तवसः बलवतः "ते तव “ओजः सामर्थ्यं “द्यावः दिवः दिवोपलक्षिताः सर्वे लोकाः “न “वरन्त न वारयन्ति । किंच “अहा प्रतिपदादीन्यहानि न वारयन्ति । तथा “मासाः चैत्राद्याः “शरदः संवत्सराश्च तव सामर्थ्यं न वारयन्ति। किंतु तव सामर्थ्यमनुसृत्य सर्वे वर्तन्त इति भावः ।। अद्रोघ ।' आमन्त्रितस्य च ' इति षाष्ठिकमाद्युदात्तत्वम् । अपिबः । यद्योगादनिघातः । मासाः । ‘ मसी परिमाणे ' । मस्यते परिमीयते त्रिंशता दिनैरिति मासः । कर्मणि घञ् । ञित्वादाद्युदात्तः । शरदः । ‘शॄ हिंसायाम् ' इत्यस्मात् शॄदॄभसोऽदिः'

इत्यधिकरणेऽदिप्रत्ययः । शीर्यन्तेऽस्यां तृणगुल्मवनस्पतीनां तेजांसीति शरत् । प्रत्ययस्वरः । वरन्त । ‘ वृञ् वरणे ' । अन्तर्भावितण्यर्थोऽत्र निवारणे वर्तते । भौवादिकः । छान्दसे लङि रूपम् । निघातः ॥

सद्यस्क्रीनाम्न्येकाहे निष्केवल्यशस्त्रे ' त्वं सद्यो अपिबः' इति सूक्तमुखीया । सूत्रितं च -- त्वं सद्यो अपिबो जात इन्द्रानु त्वाहिघ्ने अध देव देवाः ' ( आश्व. श्रौ. ९. ५) इति ।।

त्वं स॒द्यो अ॑पिबो जा॒त इ॑न्द्र॒ मदा॑य॒ सोमं॑ प॒र॒मे व्यो॑मन् ।

यद्ध॒ द्यावा॑पृथि॒वी आवि॑वेशी॒रथा॑भवः पू॒र्व्यः का॒रुधा॑याः ॥ १०

त्वम् । स॒द्यः । अ॒पि॒ब॒ः । जा॒तः । इ॒न्द्र॒ । मदा॑य । सोम॑म् । प॒र॒मे । वि॒ऽओ॑मन् ।

यत् । ह॒ । द्यावा॑पृथि॒वी इति॑ । आ । अवि॑वेशीः । अथ॑ । अ॒भ॒व॒ः । पू॒र्व्यः । का॒रुऽधा॑याः ॥१०

त्वम् । सद्यः । अपिबः । जातः । इन्द्र । मदाय । सोमम् । परमे । विऽओमन् ।

यत् । ह । द्यावापृथिवी इति । आ । अविवेशीः । अथ । अभवः । पूर्व्यः । कारुऽधायाः ॥१०

हे "इन्द्र "सद्यः तदानीमेव "जातः "परमे "व्योमन् उत्तमे स्थाने स्थितः "त्वं "मदाय हर्षाय "सोमम् "अपिबः । "यत् यदा त्वं "द्यावापृथिवी द्यावापृथिव्यौ "आविवेशीः "ह आ समन्तात् भृशं प्रविष्टोऽसि खलु । "अथ अनन्तरं "पूर्व्यः पुरातनः सन् "कारुधायाः कर्मणां विधाता "अभवः खलु ।

व्योमन् । अव रक्षणगत्यादिषु । विपूर्वस्यावतेः ' नामन् सीमन्' इत्यादिना मनिन् । ज्वरत्वर' इत्यादिना ऊठ् । विशेषेणौम व्याप्तिर्यस्य तत् । ‘सुपां सुलुक्' इत्यादिना सुपो लुक् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । आविवेशीः । ‘ विश प्रवेशने ' इत्यस्य यङ्लुकि लङि सिपि “यङो वा' इतीडागमः । ‘ इतश्च' इति सिप इकारलोपः । यद्योगादनिघातः । कारुधायाः । कारुः । करोतेः कृवापाजिमिस्वदिसाध्यशूभ्य उणप्रत्ययः । णित्वााःत् वृद्धिः । दधातेः ‘वहिहाधाञ्भ्यश्छन्दसि ' इत्यसुन्। णित्' इत्यनुवृत्तेः ' आतो युक् चिण्कृतोः' इति युगागमः । समासे गति कारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इति सूत्रात् पूर्वपदप्रकृतिस्वरः ॥ ॥ १० ।।

अह॒न्नहिं॒ परि॒शया॑न॒मर्णं॒ ओजा॒यमा॑नं तुविजात॒ तव्यां॑न् ।

न तें महि॒त्वमनुं भू॒दध॒ द्यौर्यद॒न्यया॑ स्फि॒ग्या॒३॒॑क्षामवं॑स्थाः ॥ ११

अहं॑न् । अहि॑म् । प॒रि॒ऽशया॑नम् । अर्णः॑ । ओ॒जा॒यमा॑नम् । तु॒वि॒ऽजा॒त॒ । तव्या॑न् ।

न । ते॒ । म॒हि॒ऽत्वम् । अनु॑ । भू॒त् । अध॑ । द्यौः । यत् । अ॒न्यया॑ । स्फि॒ग्या॑ । क्षाम् । अव॑स्थाः ॥११

अहन् । अहिम् । परिऽशयानम् । अर्णः । ओजायमानम् । तुविऽजात । तव्यान् ।

न । ते । महिऽत्वम् । अनु । भूत् । अध । द्यौः । यत् । अन्यया । स्फिग्या । क्षाम् । अवस्थाः ॥११

“तुविजात । बहूनि जातानि पृथिव्यादीनि यस्मात सोऽयं तुविजातः । हे तुविजात इन्द्र “तव्यान् अतिशयेन प्रवृद्धस्त्वम् “अर्णः “परिशयानम् उदकं परितः

शयानमुदकमन्तः कृत्वा परितो वर्तमानमत एव “ओजायमानं बलमाचरन्तम् “अहिम् । आ समन्ताद्धन्ति अपहरत्युदकमित्यहिर्मेघः । तमिमं मेघम् "अहन् उदकप्रेरणाय हतवानसि । “अध अथ “ते 'महित्वं महिमानं “द्यौः “न “अनु “भूत् नानुभवति न जानाति । “यत् यस्मात् त्वम् “अन्यया एकतरया “स्फिग्या कट्या “क्षां भूमिम् “अवस्थाः अवच्छाद्य तिष्ठसि ।। अहन् । हन्तेः लङि सिब्लोपे' रूपम्। अहिम् । “हन हिंसागत्योः । ‘ आङि श्रिहनिभ्यां ह्रस्वश्च ' इति इणप्रत्ययः डिच्च पूर्वपदस्य” ह्रस्वश्च । वृषादित्वात् आद्युदात्तत्वम्। ओजायमानम् । ओजःशब्दादाचारार्थे ' कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययः सलोपश्च । ङित्वादात्मनेपदम् । प्रत्ययस्वरः । तव्यान् । तु इति सौत्रो धातुः । अस्मात् तृजन्तात् ‘तुश्छन्दसि ' इतीयसुन् । ‘तुरिष्ठेमेयःसु ' इति तृचो लोपः । भसंज्ञायामोर्गुणः । इकारलोप-श्छान्दसः । नित्स्वरः । भूत् । भवतेर्लुङि

रूपम् । स्फिग्या । 'यचि भम्' इति भसंज्ञायाः बाधितत्वात् 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां जश्त्वम् । तृतीयायाः पूर्वसवर्णः । क्षाम् । ‘क्षि निवासगत्योः । ‘ अन्येभ्योऽपि दृश्यते' इति निरुपपदादपि डप्रत्ययः । ततष्टाप् । क्षियन्ति निवसन्त्यस्यां प्राणिन इति क्षा भूमिः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः। अवस्थाः। ‘वस आच्छादने' इत्यस्य लङि अनुदात्तत्वात् आत्मनेपदम् । थासि अदादित्वाच्छपो लुक् । यद्योगादनिघातः । अडागमस्वरः ॥

य॒ज्ञो हि त॑ इ॑द्र॒ वर्ध॑नो॒ भूदु॒त प्रि॒यः सु॒तसो॑मो मि॒येधः॑ ।

य॒ज्ञेन॑ य॒ज्ञम॑व य॒ज्ञियः॒ सन्य॒ज्ञस्ते॒ वज्र॑महि॒हत्य॑ आवत् ॥
१२

य॒ज्ञः । हि । ते॒ । इ॒न्द्र॒ । वर्ध॑नः । भूत् । उ॒त । प्रि॒यः । सु॒तऽसो॑मः । मि॒येधः॑ ।

य॒ज्ञेन॑ । य॒ज्ञम् । अ॒व॒ । य॒ज्ञियः॑ । सन् । य॒ज्ञः । ते॒ । वज्र॑म् । अ॒हि॒ऽहत्ये॑ । आ॒व॒त् ॥१२

यज्ञः । हि । ते । इन्द्र । वर्धनः । भूत् । उत । प्रियः । सुतऽसोमः । मियेधः ।

यज्ञेन । यज्ञम् । अव । यज्ञियः । सन् । यज्ञः । ते । वज्रम् । अहिऽहत्ये । आवत् ॥१२

हे “इन्द्र अस्मदीयोऽयं “यज्ञः “ते तव "वर्धनः हविष्प्रदानेन वर्धयिता "भूत् "हि भवति खलु। “उत अपि च "सुतसोमः अभिषुतसोमवान् “मियेधः सारभूतोऽयं यज्ञः तव "प्रियः । स त्वं "यज्ञियः यज्ञार्हः “सन् 'यज्ञं यज्ञस्य कर्तारं यजमानं “यज्ञेन अनुष्ठीयमानेनानेन “अव फलप्रदानेन रक्ष।

किंचायं “यज्ञः "ते तव “वज्रमहिहत्ये वृत्रहनने कर्मणि “आवत् रक्षतु ॥ वर्धनः । वृधु वर्धने ' इत्यस्य ण्यन्तस्य नन्द्यादित्वात् ल्युप्रत्ययः । लित्स्वरः । भूत् । हियोगादनिघातः । अव । अवतेर्लोटि रूपम् । निघातः । सन् । असेः शतरि रूपम् । प्रत्ययस्वरः । अहिहत्ये । “हन हिंसागत्योः । इत्यस्य भावे ‘हनस्त च ' इति क्यप् तकारश्चान्तादेशः । कृदुत्तरपदस्वरः । आवत् । अवतेश्छान्दसे लहङि रूपम् । निघातः ॥

य॒ज्ञेनेन्द्र॒मव॒सा च॑क्रे अ॒र्वागैनं॑ सु॒म्नाय॒ नव्यं॑से ववृत्यां ।

यः स्तोमे॑भिर्वावृ॒धे पू॒र्व्ये॑भि॒र्यो मं॑ध्य॒मेभिं॑रु॒त नूतं॑नेभिः ॥१३

य॒ज्ञेनं॑ । इन्द्रं॑म् । अवं॑सा । आ । च॒क्रे॒ । अ॒र्वाक् । आ । ए॒न॒म् । सु॒म्नायं॑ । नव्यं॑से । व॒वृ॒त्या॒म् ।

यः । स्तोमे॑भिः । व॒वृ॒धे । पू॒र्व्येभिः॑ । यः । म॒ध्य॒मेभिः॑ । उ॒त । नूत॑नेभिः ॥१३

यज्ञेन । इन्द्रम् । अवसा । आ । चक्रे । अर्वाक् । आ । एनम् । सुम्नाय । नव्यसे । ववृत्याम् ।

यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥१३

हे इन्द्र सर्वो यजमानः “अवसा स्वरक्षकेण “यज्ञेन “इन्द्रं त्वाम् “अर्वाक् “आ "चके हविष्प्रदानेनाभिमुखं करोति । तथाहं “नव्यसे नवतराय “सुम्नाय धनाय “एनं त्वाम् “आ “ववृत्याम् यज्ञेनावृत्तं मदभिमुखं कुर्याम् । कीदृशस्त्वम् । “यः पूर्व्येभिः पुरातनैः “स्तोमेभिः स्तोत्रैः "ववृधे । तथा “यः इन्द्रः “मध्यमेभिः मध्ये भवैः स्तोत्रैः “उत अपि च “नूतनेभिः अस्माभिः क्रियमाणैः अधुनातनैः स्तोत्रैर्वर्धते । चक्रे । करोतेर्लिटि रूपम् । नव्यसे । नवशब्दादीयसुनि

भसंज्ञायामकारलोपे ईकारलोपश्छान्दसः ।
नित्त्वदाद्युदात्तः । ववृत्याम् । ‘वृतु वर्तने '। लिङि' बहुलं छन्दसि ' इति शपः श्लुः । व्यत्ययेन परस्मैपदम् । निघातः । ववृधे । ' वृधु वर्धने ' इत्यस्य लिटि रूपम् । प्रत्ययस्वरः । मध्यमेभिः । मध्यशब्दात् शैषिकार्थे मध्यान्मः' ( पा. सू. ४. ३. ८) इति मप्रत्ययः । प्रत्ययस्वरः । नूतनेभिः । नवशब्दस्य ' त्नप्तनन्खाश्च प्रत्यया वक्तव्या नृ इत्यादेशश्च' ( पा. म. ५, ४. ३०.६ ) इति तन-न्त्रसत्ययो नू इत्यादेशश्च ॥

वि॒वेष॒ यन्मां धि॒षणां ज॒जान॒ स्तवैं पु॒रा पार्या॒दिंद्र॒मह्नः॑ ।

अंहंसो॒ यत्रं पी॒पर॒द्यथां नो ना॒वेव॒ यांतंमु॒भयें हवंते ॥१४

वि॒वेषं । यत् । मा॒ । धि॒षणां । ज॒जानं । स्तवैं । पु॒रा । पार्यात् । इन्द्रंम् । अह्नः॑ ।

अंहंसः । यत्रं । पी॒परंत् । यथां । न॒ः । ना॒वाऽइंव । यान्तंम् । उ॒भयें । ह॒व॒न्ते॒ ॥१४

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः ।

अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यान्तम् । उभये । हवन्ते ॥१४

“यत् यदा “धिषणा इन्द्रं स्तवानीति मदीया बुद्धिर्मां "विवेष व्याप्नोत् तदाहं स्तोत्रं “जजान करोमि । बुद्धेः स्वरूपं दर्शयति । अहं “पार्यात् पारे भवादतिदूरवर्तिनः विघ्नकारिणः “अह्नः “पुरा पूर्वं “स्तवै स्तवानि । “यत्र यस्यां धिषणायामेव जातायां सत्यां स इन्द्रः “नः अस्मान् “अंहसः पापरूपाद्दारिद्र्यात् “यथा "पीपरत् यथा पारं नयेत् तथास्मदुभयपार्व्“वर्तिधनार्थिनो जनाः “हवन्ते आह्वयन्ति । तत्र दृष्टान्तः। “नावेव “यान्तम् । यथा

नद्यादिषु नौकया यान्तं गच्छन्तं पुरुषम् “उभये उभयकूलवर्तिनः जना हवन्ते आह्वयन्ति तद्वत् ।। विवेष । ' विष्लृ व्याप्तौ' इत्यस्य लिटि णलि रूपम् । लित्स्वरः । जजान ।' जन जनने 'इत्यस्य लिट्युत्तमे णलि रूपम् । वाक्यभेदात् अनिघातः । अंहसः । अम गत्यादिषु । ' अमेर्हुक् च ' (उ, सू. ४, ६५२ ) इत्यसुन्प्रत्ययो हुगागमश्च । नित्स्वरः । पीपरत् । “पॄ पालनपूरणयोः ' इत्यस्य लुङि चङि ह्रस्वाभ्यासेत्वदीर्घगुणाः । यथायोगादनिघातः । लित्स्वरः । नावेव । नुद प्रेरणे' इत्यस्मात् ' ग्लानुदिभ्यो डौः ' ( उ. सू. २, २२ ) इति डौप्रत्ययः । नुद्यत इति नौः प्लवः । सावेकाचः ० ' इति तृतीयाया उदात्तत्वम् । ‘ इवेन नित्यसमासः विभक्त्यलोपः० ' इत्यादि । उभये । उभशब्दात् परस्य तयपः ‘ उभादुदात्तो नित्यम् ' ( पा. सू. ५, २, ४४ ) इत्ययजादेशः । वचनसामर्थ्यादादेः उदात्तत्वम् । हवन्ते । ह्वयतेर्लटि रूपम् ॥

माध्यदिने सवन आग्नीध्रीयस्थ ' आपूर्णो अस्य ' इति प्रस्थितयाज्या । सूत्रितं च आपूर्णो अस्य कलशः स्वाहेति माध्यंदिन्यः ' ( आश्व. श्रौ. ५. ५) इति ।।

आपूंर्णो अस्य क॒लशः॒ स्वाहा॒ सेक्तें॑व॒ कोशं॑ सिसिचे॒ पिबं॑ध्यै ।

समुं॑ प्रि॒या आवं॑वृत्र॒न्मदा॑य प्रदक्षि॒णिद॒भि सोमा॑स॒ इंद्रं॑ ॥ १५

आऽपूं॑र्णः । अ॒स्य॒ । क॒लशः॑ । स्वाहा॑ । सेक्ता॑ऽइव । कोशं॑म् । सि॒सि॒चे॒ । पिबं॑ध्यै ।

सम् । ऊ॒ं इतिं॑ । प्रि॒याः । आ । अ॒व॒वृ॒त्र॒न् । मदा॑य । प्र॒ऽद॒क्षि॒णित् । अ॒भि । सोमा॑सः । इन्द्रं॑म् ॥१५

आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् । सिसिचे । पिबध्यै ।

सम् । ऊं इति । प्रियाः । आ । अववृत्रन् । मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इन्द्रम् ॥१५

हे इन्द्र “अस्य तव पानार्थं “कलशः द्रोणकलशः सोमेन “आपूर्णः । स्वाहा' स्वाहाकृतो दत्तश्च सोमसहितः कलशः “पिबध्यै तव पानार्थं “सिसिचे तं सोमं चोदिताधारे सिञ्चामि। तत्र दृष्टान्तः । “कोशं “सेक्तेव । यथा सेक्ता सेचकः जलपूर्णात् कोशात् दृतेः सकाशात् जलं पात्रान्तरे सिञ्चति तद्वत् । “प्रियाः स्वादुतमाः “सोमासः दत्तास्ते सोमाः “इन्द्रं त्वाम् “अभि अभिलक्ष्यैव “मदाय तव हर्षार्थं “प्रदक्षिणित् प्रादक्षिण्येन “सम् “आववृत्रन् सम्यगावृत्य वर्तन्ताम् ॥ आपूर्णः। पॄ पालनपूरणयोः' इत्यस्य कर्मणि निष्ठा । ‘रदाभ्याम्' इति तस्य नत्वम् । ‘गतिरनन्तरः' इति

गतिस्वरः । स्वाहा । निपातत्वादाद्युदात्तः । सेत्केव कोशम्। 'न लोकाव्यय' इति षष्ठीप्रतिषेधः । सिसिचे । ‘षिच क्षरणे' इत्यस्य लिटि रूपम् । पिबध्यै । ‘पा पाने' इत्यस्य तुमर्थे शध्यैन्प्रत्ययः। शित्त्वात् पिबादेशः । नित्त्वादाद्युदात्तः। आववृत्रन्। ‘वृतु वर्तने' इत्यस्य लङि शप् । 'बहुलं छन्दसि' इति तस्य शपः श्लुः । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि ' इति झे रुडागमः ॥

न त्वां गभी॒रः पुंरुहू॒त॒ सिंधु॒र्नाद्रंय॒ः परि॒ षंतों वरंत ।

इ॒त्था सखिंभ्य इषि॒तो यदिं॒द्रा दृ॒ळ्हं चि॒दरुंजो॒ गव्यंमू॒र्वं ॥ १६

न । त्वा॒ । ग॒भी॒रः । पु॒रु॒ऽहू॒त॒ । सिन्धुः॑ । न । अद्रंयः । परिं । सन्तः॑ । व॒र॒न्त॒ ।

इ॒त्था । सखि॑ऽभ्यः । इ॒षि॒तः । यत् । इ॒न्द्र॒ । आ । दृ॒ळ्हम् । चि॒त् । अरु॑जः । गव्य॑म् । ऊ॒र्वम् ॥१६

न । त्वा । गभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि । सन्तः । वरन्त ।

इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र । आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥१६

हे “पुरुहूत “इन्द्र “गभीरः “सिन्धुः समुद्रः “त्वा त्वां “न वारयति । ततः “परि परितः वर्तमाना: “सन्तः “अद्रयः शैलास्त्वां “न “वरन्त न वारयन्ति । किंतु त्वामनुसृत्य वर्तन्ते । "यत् यस्मात् “इत्था इत्थमनेन प्रकारेण “सखिभ्यः सखिभिर्देवैः “इषितः प्रार्थितः त्वं “दृळ्हं “चित् अतिप्रबलमपि “गव्यं गवि भवम् अवटे वर्तमानम् “ऊर्वम् ऊर्वानलम् "आ "अरुजः सम्यगभाङ्क्षीः ॥ गभीरः । ‘गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' । अस्मात् ईरच्प्रत्ययः' ।

धकारस्य भकारः आकारस्य ह्रस्वश्च ‘ गभीरगम्भीरौ ' ( उ. सू. ४. ४७५) इत्यनेन निपात्यते । चित्स्वरः । सिन्धुः । ‘ स्यन्दू प्रस्रवणे । ‘ स्यन्देः संप्रसारणं धश्च' इत्युप्रत्ययः संप्रसारणं दकारस्य धकारः । ‘ नित्' इत्यनुवृत्तेराद्युदात्तः । परिषन्तः । सन्तः । अस्तेः शतरि रूपम्। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । केचित् परेः' क्रियान्वयम् इच्छन्ति । तदा षत्वमनुपपन्नम् । परि। निपातस्वरः । सन्तः। प्रत्ययस्वरः । वरन्त । वृञ् वरणे । भौवादिकः । लङि रूपम् । निघातः । अरुजः । ‘ रुजो भङ्गे' इत्यस्य लङि रूपम् । गव्यम् । गोर्विकार इत्यर्थे ' गोपयसोर्यत्' इति यत् । यतोऽनावः' इत्याद्युदात्तत्वम् ॥

शु॒नं हु॑वेम म॒घवा॑न॒मिंद्र॑म॒स्मिन्भरे॒ नृत॑मं॒ वाज॑सातौ ।

शृ॒ण्वंत॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नंतं॑ वृ॒त्राणि॑ सं॒जित॒ं धना॑नां ॥१७

शु॒नम् । हु॒वे॒म॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ । नृऽत॑मम् । वाज॑ऽसातौ ।

शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् । वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥१७

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।

शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥१७

एषा ऋक् पूर्वमेव व्याख्याता ॥ ॥ ११ ॥

**टिप्पणी**

यद्वै नेति न प्रेति यत्स्थितं तद्द्वितीयस्याह्नो रूपं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्बार्हतं यत्त्रैष्टुभं यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाणि.......इन्द्र सोमं सोमपते पिबेममिति सूक्तं सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं - ऐ.ब्रा. ४.३१ । ओंकारे एति गुणः ब्रह्मणः एवं प्रेति गुणः रुद्रस्य भवति - अ, उ, म। मध्यमस्य उकारस्य विष्णोः गुणं स्थितवत् भवति, कुम्भकस्य। किं द्वितीयमहः विष्णोर्वाची अस्ति, अयं अन्वेषणीयः। भागवतपुराणस्य द्वितीयः स्कन्धः विष्णोर्विभूतिभ्यः सम्बद्धः अस्ति।

अभिप्लवषडहस्य प्रथममहः(ऋ. ४.२१)

अभिप्लवषडहस्य तृतीयमहः (ऋ. ५.२९)

# ऋग्वेदः सूक्तं ३.३३



दे. नद्यः, ४, ८, १० विश्वामित्रः, ६, ७ इन्द्रः।त्रिष्टुप्, १३ अनुष्टुप्।

---

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।

गावेव शुभ्रे मातरा रिहाणे विपाट् छुतुद्री पयसा जवेते ॥१॥

इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः ।

समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे ॥२॥

अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म ।

वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती ॥३॥

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।

न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥४॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।

प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥५॥

इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ।

देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥६॥

प्रवाच्यं शश्वधा वीर्यं तदिन्द्रस्य कर्म यदहिं विवृश्चत् ।

वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥७॥

एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि ।

उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमस्ते ॥८॥



## *राजगृहतः वैशालीं गमनाय गौतमेन बुद्धेन गंगायाः चमत्कारिकं पारणम्*

ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन ।

नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः ॥९॥

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।

नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥१०॥

यदङ्ग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः ।

अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम् ॥११॥

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम् ।

प्र पिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥१२॥

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।

मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम् ॥१३॥

**सायणभाष्यम्**

' प्र पर्वतानाम् ' इति त्रयोदशर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका-' प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोस्तत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विन्द्रस्तुतिरन्त्यानुष्टुप् ' इति । अत्र चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वान्नद्य एव ऋषयः शिष्टानां विश्वामित्रवाक्यत्वात्स एव ऋषिः । अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः । इन्द्रो देवता ।. यद्यपि षष्ठ्यां सप्तम्यां च विश्वामित्रो नद्यश्च स्तूयन्ते तथापीन्द्र एव देवता । सूक्तविनियोगो लैङ्गिकः ।। पुरा किल विश्वामित्रः

पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव । स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययौ अनुययुरितरे । अथोत्तितीर्षुर्विश्वामित्रः अगाधजले ते नद्यौ दृष्ट्वा उत्तरणार्थम् आद्याभिः तिसृभिस्तुष्टाव । ।

प्र पर्व॑तानामुश॒ती उ॒पस्था॒दश्वे॑ इव॒ विषि॑ते॒ हास॑माने ।

गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट् छुतु॒द्री पय॑सा जवेते ॥१

प्र । पर्व॑तानाम् । उ॒श॒ती इति॑ । उ॒पऽस्था॑त् । अश्वे॑ इ॒वेत्यश्वे॑ऽइव । विसि॑ते॒ इति॒ विऽसि॑ते । हास॑मा॒ने इति॑ ।

गावा॑ऽइव । शु॒भ्रे इति॑ । मा॒तरा॑ । रि॒हा॒णे इति॑ । विऽपा॑ट् । शु॒तु॒द्री । पय॑सा । ज॒वे॒ते॒ इति॑ ॥१

प्र। पर्वतानां। उशती इति। उपऽस्थात्। अश्वे इवेत्यश्वेऽइव। विसिते इति विऽसिते। हासमाने इति।

गावऽइव। शुभ्रे इति। मातरा।रिहाणे इति।विऽपाट्। शुतुद्री। पयसा।जवेते इति ॥१॥

पर्वतानां गिरीणां शैलानामुपस्थादुत्संगान्निर्गत्योशती समुद्रगमनं कामयमाने । गमने दृष्टांतः । अश्वे इव। यथा विषिते मंदुरातो विमुक्ते हासमाने अन्योन्यजवेन स्पर्धमाने । यद्वा हृष्यंत्यावश्वे इव वडवे इव त्वरया गच्छंत्यो परस्परं हृष्यंत्यौ । तथा गावेव शुभ्रे । यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने । किंच मातरा। यथा मातरौ धेनू रिहाणे । अंतर्णीतसनर्थो लिहिः। वत्सं जिह्वया लेढुमिच्छंत्यौ शीघ्रं गच्छतस्तद्वत्समुद्रं गंतु जवाद्गच्छंत्यौ पयसा संयुक्ते विपाट्। कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट् । शुतुद्री । शु क्षिप्रं तु तुन्ना तुन्नेव

द्रवति गच्छतीति शुतुद्री। एतन्नामके नद्यौ प्र जवेते । समुद्रं प्रति शीघ्रं गच्छतः । अत्र निरुक्तं । पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते । नि° ९. ३९.। इति ॥ उशती। वश कांतौ। अस्य शतुर्ङित्त्वाद्ग्रहिज्यावयीत्यादिना संप्रसारणं । विषिते । षिञ् बंधन इत्यस्य कर्मणि निष्ठा। संहितायां परिनिविभ्यः सेवसितसयसिवुसहेत्यादिना। पा० ८. ३.७०.। षत्वं ।। गतिरनंतर ति गतेः प्रकृतिस्वरः । हासमाने । हासतिः स्पर्धाकर्मा हसे हसने वा। शानच् । तस्य लसार्वधातुकस्वरे कृते धातुस्वरः। रिहाणे । लिह आस्वादने । स्वरितेत्त्वादुभयपदी। शानच् । अदादित्वाच्छपो लुक् । लकारस्य रेफश्छांदसः । रेफमवलंब्य णत्वं । चित्त्वादंतोदात्तः । विपाट्। पट गतौ

पश बाधनस्पर्शनयोरिति वा ण्यंतावेतौ विपूर्वौ । शकारस्य व्रश्चादिना षत्वं । शुतुद्री। छांदसी रूपसिद्धिः । जवेते । जुङ गतौ । भौवादिकः । ङित्त्वादात्मनेपदं । आतो ङित इतीयादेशः । निघातः ॥

इन्द्रे॑षिते प्रस॒वं भिक्ष॑माणे॒ अच्छा॑ समु॒द्रं र॒थ्ये॑व याथः ।

स॒मा॒रा॒णे ऊ॒र्मिभि॒ः पिन्व॑माने अ॒न्या वा॑म॒न्यामप्ये॑ति शुभ्रे ॥२

इन्द्रे॑षित॒े इतीन्द्र॑ऽइषिते । प्र॒ऽस॒वम् । भिक्ष॑माणे॒ इति॑ । अच्छ॑ । स॒मु॒द्रम् । र॒थ्या॑ऽइव । या॒थ॒ः ।

स॒मा॒रा॒णे इति॑ स॒म्ऽआ॒रा॒णे । ऊ॒र्मिऽभि॑ः । पिन्व॑मान॒े इति॑ । अ॒न्या । वा॒म् । अ॒न्याम् । अपि॑ । ए॒ति॒ । शु॒भ्रे॒ इति॑ ॥२

इंद्रेषिते इतींऽइषिते । प्रऽसवं। भिक्षमाणे इति । अच्छ। समुद्रं । रथ्याऽइव। याथः ।

समाराणे इति संऽआराणे । ऊर्मिऽभिः । पिन्वमाने इति । अन्या। वां। अन्यां। अपि । एति। शुभ्रे इति ॥२॥

हे नद्यौ इंद्रेषिते इंद्रेण प्रेषिते प्रसवं तस्येंद्रस्यानुज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रमच्छाभिमुख्येन याथः । गच्छथः । तत्र दृष्टांतः। रथ्येवेति । यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत् । किं कुर्वंत्यौ । समाराणे परस्परं संगच्छंत्यावूर्मिभिस्तरंगैः पिन्वमाने परिसरप्रदेशं संतर्पयंत्यो शुभे शोभमाने। युवां समुद्रं गच्छथ इति । पूर्वेणान्वयः। तथा वां युवयोर्मध्येऽन्यैकान्यामपरां नदीमप्येति । अपिगच्छति । परस्परमैक्यमापद्यत इत्यर्थः ॥ इंद्रेषिते । इष गतावित्यस्य कर्मणि निष्ठायास्तीषसहेत्यादिना इडागमः । तृतीया कर्मणीति

पूर्वपदस्वरः । प्रसवं । षू प्रेरण इत्यस्याप्। थाथादिस्वरः । भिक्षमाणे । भिक्ष याञ्चायां । आत्मनेपदी। शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः। रथ्येव । रथस्येमौ । तस्येदमित्यर्थे रथाद्यदिति यत्प्रत्ययः। तित्स्वरितः। इवेन विभक्त्यलोपः । याथः । यातेर्लटि रूपं । समाराणे । ऋ गतावित्यस्य लिट् । संपूर्वस्यार्तेः समो गमीत्यादिनात्मनेपदत्वात्तस्य कानजादेशः । ऋच्छत्यॄतामिति गुणः । पिन्वमाने । पिवि सेचने । भूवादिः । लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः ॥

अच्छा॒ सिन्धु॑ मा॒तृत॑मामयासं॒ विपा॑शमु॒र्वीं सु॒भगा॑मगन्म ।

व॒त्समि॑व मा॒तरा॑ सं॑रिहा॒णे स॑मा॒नं योनि॒मनु॑ सं॒चर॑न्ती ॥३

अच्छं । सिन्धुंम् । मा॒तृऽतंमाम् । अ॒या॒स॒म् । विऽपांशम् ।
उ॒र्वीम् । सु॒ऽभगांम् । अ॒ग॒न्म॒ ।

व॒त्सम्ऽइंव । मा॒तरां । सं॒रि॒हा॒णे इतिं स॒म्ऽरि॒हा॒णे ।
स॒मा॒नम् । योनिंम् । अनुं । स॒ञ्चरंन्ती॒ इतिं स॒म्ऽचरंन्ती ॥
३

अच्छ। सिंधुं । मातृऽतमा। अयासं। विऽपाशं । उर्वीं।
सुऽभगां। अगन्म।

वत्संऽइव। मातरा। संरिहाणे इति संऽरिहाणे । समानं ।
योनिं । अनु। संचरंती इति संऽचरंती ॥३॥

हे नद्यौ मातृतमामतिशयेन मातरं सिंधु स्रवंतीं शुतुद्रीं
त्वामच्छाभिमुख्येनायासं । विश्वामित्रोऽहं प्राप्तोऽभूवं ।
उर्वीं महतीं सुभगां सौभाग्यवतीं विपाशं त्वामगन्म । वयं
प्राप्ताः स्मः । किं कुर्वत्यौ । मातरा मातरौ द्वे धेनू

वत्समिव संरिहाणे। अंतर्णीतसन्नर्थो लिहिः। जिह्वया लेढुमिच्छंत्यौ यथा वत्समनुगच्छतस्तद्वत् समानमेकं योनिं स्थानं समुद्रमनु अभिलक्ष्य संचरंती सम्यक् चरंत्यौ। युवामयासिषमिति पूर्वेणान्वयः ॥ अयासं। या प्रापण इत्यस्य रूपं । इडभावश्छांदसः। अगन्म। गमेर्लङि बहुलं छंदसीति शपो लुक् । म्वोश्चेति मकरस्य नकारः। निघातः । संचरंती। चरतिर्गत्यर्थः । तृतीयायुक्तत्वाभावादात्मनेपदाभावः। शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः ॥

ए॒ना व॒यं पय॑सा॒ पिन्व॑माना॒ अनु॒ योनिं॑ दे॒वकृ॑तं॒ चर॑न्तीः ।

न वर्त॑वे प्रस॒वः सर्ग॑तक्तः कि॒युर्विप्रो॑ न॒द्यो॑ जोहवीति ॥४

ए॒ना । व॒यम् । पय॑सा । पिन्व॑मानाः । अनु॑ । योनि॑म् । दे॒वऽकृ॑तम् । चर॑न्तीः ।

न । वर्तवे । प्र॒ऽस॒वः । सर्गऽतक्तः । कि॒म्ऽयुः । विप्रः॑ । न॒द्यः॑ । जो॒ह॒वी॒ति॒ ॥४

एना। वयं । पयसा । पिन्वमानाः । अनु। योनिं । देवऽकृतं । चरंतीः ।।

न। वर्तवे। प्रऽसवः । सर्गऽतक्तः । किंऽयुः । विप्रः । नद्यः । जोहवीति ॥४॥

एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः । एनैनेन पयसा पिन्वमानाः संतर्पयंत्यो देवकृतं देवेनेंद्रेण कृतं संदिष्टं योनिं स्थानं समुद्रमनु लक्षीकृत्य चरंतीर्गच्छंत्यो वयमास्महे । द्वयोर्बहुवचनं पूजार्थं । तासामस्माकं सर्गतक्तः सर्गे गमने प्रवृत्तः प्रसव उद्योगो न वर्त्तवे । निवर्तनाय न भवति । किंयुः किमिच्छन्नसौ विप्रो ब्राह्मणो नद्यो नदीरस्मान् जोहवीति । भृशमाह्वयति ॥ एना । इदंशब्दस्य तृतीयाया एनादेशः । सुपां सुलुगिति तृतीयाया। आजादेशः ।

ऊडिदमिति विभक्ते रुदात्तत्वं । पिन्वमानाः । पिवि सेचने । देवकृतं । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः । वर्त्तवे । वृतु वर्तने । तुमर्थे तवेन्प्रत्ययः। नित्स्वरः । सर्गतक्तः । ते चेति पूर्वपदप्रकृतिस्वरः। किंयुः । किमिच्छन् । क्यचि मांताव्ययप्रतिषेधः । पा°३.१. ८.१.। इति छांदसत्वादत्र प्रतिषेधो न भवतीति क्यच् । क्याच्छंदसीत्युप्रत्ययः । प्रत्ययस्वरः । नद्यः । छांदसो यणादेशः । जोहवीति । ह्वयो यङ्लुक्यभ्यस्तस्य चेति संप्रसारणे कृते गुणो यङ्लुकोरित्यभ्यासस्य गुणः । यङो वेतीडागमः । गुणः । निघातः ॥

रम॑ध्वं मे॒ वच॑से सो॒म्याय॒ ऋता॑वरी॒रुप॑ मुहू॒र्तमेवैः॑ ।

प्र सिन्धु॒मच्छा॑ बृह॒ती म॑नी॒षाव॒स्युर॑ह्वे कुशि॒कस्य॑ सू॒नुः ॥५

रमंध्वम् । मे॒ । वचंसे । सो॒म्यायं । ऋतंऽवरीः । उपं । मु॒हू॒र्तम् । एवैः॑ ।

प्र । सिन्धुंम् । अच्छं । बृ॒ह॒ती । म॒नी॒षा । अ॒व॒स्युः । अ॒ह्वे॒ । कु॒शि॒कस्यं । सू॒नुः ॥५

रमध्वं । मे। वर्चसे । सोम्याय । ऋतऽवरीः। उप । मुहूर्तं । एवैः ।।

प्र। सिंधुं। अच्छ। बृहती। मनीषा। अवस्युः । अह्वे। कुशिकस्य । सूनुः ॥५॥

विश्वामित्रो नदीः प्रति बूते । ऋतावरीः । ऋतमुदकं । तद्वत्यो हे नद्यो यूयं मे विश्वामित्रस्य मम सोम्याय। उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने। वचसे तदर्थमेवैः। पंचम्यर्थे तृतीया। शीघ्रगमनेभ्यो मुहूर्तं मुहूर्तमात्रमुप रमध्वं । उपपूर्वो रमिरुपसंहारे वर्तते ।

क्षणमात्रं शीघ्रगमनादुपरता भवत । सामान्येन नदीषुच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते । कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहं बृहती महत्या मनीषा मनीषया स्तुत्यावस्युरात्मनो रक्षणमिच्छन् सन् सिंधु शुतुद्रीं त्वामच्छाभिमुख्येन प्राह्वे। प्रकर्षणाह्वयामि । अत्र निरुक्तं । उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा । प्राभिह्वयामि सिंधुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः । कुशिको राजा बभूव । नि २. २५.। इति ॥ रमध्वं । रमु उपरमे। उपपूर्वाद्रमतेर्विभाषाकर्मकात् । पा० १.३. ८५.। इत्यात्मनेपदं । ऋतावरीः । ऋतशब्दान्मत्वर्थे छंदसीवनिपाविति वनिप् । वनो र चेति ङीप् रेफश्चांतादेशः । वा छंदसीति सवर्णदीर्घः । आमंत्रितस्य पादादित्वात्षाष्ठिकमाद्युदात्तत्वं । एवैः । इण गतौ ।

इण्शीङ्भ्यां वन्। आर्धधातुकलक्षणो गुणः । नित्स्वरः ।
बृहती मनीषा। उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः ।
अवस्युः । अवो रक्षणमिच्छन् । सुप आत्मनः क्यच् । नः
क्य इति नकारांतस्य पदसंज्ञाया नियमितत्वादत्र
सकारस्य रुर्न भवति । क्याच्छंदसीत्युप्रत्ययः । अह्वे।
हूयतेर्लुङि सिच आत्मनेपदेष्वन्यतरस्यां । पा० ३.१.५४.।
इत्यङादेशः । गुणः । निघातः ॥ ॥१२॥

इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑हन्वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।

दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥६

इन्द्रः॑ । अ॒स्मान् । अ॒र॒द॒त् । वज्र॑ऽबाहुः । अप॑ । अ॒ह॒न् ।
वृ॒त्रम् । प॒रि॒ऽधिम् । न॒दीना॑म् ।

दे॒वः । अ॒न॒य॒त् । स॒वि॒ता । सु॒ऽपा॒णिः । तस्यं । व॒यम् ।
प्र॒ऽस॒वे । या॒म॒ः । उ॒र्वीः ॥६

इंद्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप। अहन्। वृत्रं । परिऽधिं । नदीनां।

देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयं । प्रऽसवे । यामः। उर्वीः ॥६॥

नद्यः प्रत्यूचुः । हे विश्वामित्र वज्रबाहुः । वज्रयुक्तो बाहुर्यस्यासौ वज्रबाहुः । तादृशो बलवानिंद्रो नदीरस्मानरदत् । रदतिः खनतिकर्मा। अखनत् । कथमखनत्। उच्यते । नदीनां शब्दकारिणीनामपां परिधिं परितो निहितमुदकमंतः कृत्वा परितो वर्तमानमित्यर्थः । तादृशं वृत्रं । वृणोत्याकाशमिति वृत्रो मेघः । तं मेघमपाहन् । जघान । तस्मिन्हत आपः पतिताः । ताभिर्गच्छंतीभिर्वयं खाताः । एवं मेघहननद्वारेणाखनत् ।

न केवलमखनत् किं तर्हि सविता सर्वस्य जगतः प्रेरकः सुपाणिः शोभनहस्त उत्पत्तिस्थितिकर्तृत्वात्तादृशो देवो द्योतमान इंद्रो ऽस्मानानयत् । मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत् । तस्य तादृशसामर्थ्योपेतस्येंद्रस्य प्रसवेऽभ्यनुज्ञायां वर्तमाना उर्वीरुदकैः प्रभूता वयं यामः । गच्छामः । न तव वचनादुपरमामहे । उक्तार्थं यास्को ब्रवीति । इंद्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन्वृत्रं परिधिं नदीनामिति व्याख्यातं । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान्पूजयंति । तस्य वयं प्रसवे याम उर्वीरूर्व्यः । नि० २. २६.। इति ॥ अरदत् । रदतेर्लङि रूपं । वज्रबाहुः । बहुव्रीहौ पूर्वपदस्वरः। अहन् । हंतेर्लङि रूपं । निघातः । परिधिं । डुधाञ् धारणपोषणयोरित्यस्मात्कर्मण्युपसर्गे घोः किरिति किप्रत्ययः । आतो लोपः । कृदुत्तरपदस्वरः । अनयत् । नयतेर्लङि रूपं । सुपाणिः । पण व्यवहारे स्तुतौ च ।

अशिपणाय्यो रुडायलुकौ च । उ॰ ४. १३२.। इतीण् । आयलुक् । बहुव्रीहौ नञ्सुभ्यामिति स्वरः । प्रसवे । षू प्रेरणे । ॠदोरविति भावेऽप्प्रत्ययः । थाथघञ्क्तेत्युत्तरपदांतोदात्तत्वं । यामः । या प्रापण इत्यस्य लटि रूपं । निघातः । उर्वीः । उरुशब्दाद्वोतो गुणवचनादिति ङीष् । वा छंदसीति सवर्णदीर्घः । प्रत्ययस्वरः ।।

प्र॒वाच्यं॑ शश्व॒धा वी॒र्यं१॒॑ तदिन्द्र॑स्य॒ कर्म॒ यदहिं॑ विवृ॒श्चत् ।

वि वज्रे॑ण परि॒षदो॑ जघा॒नाय॒न्नापोऽयं॑नमि॒च्छमा॑नाः ॥७

प्र॒ऽवाच्य॑म् । श॒श्व॒धा । वी॒र्य॑म् । तत् । इन्द्र॑स्य । कर्म॑ । यत् । अहि॑म् । वि॒ऽवृ॒श्चत् ।

वि । वज्रेंण । प॒रि॒ऽसदः॑ । ज॒घा॒न॒ । आयंन् । आपः॑ । अयंनम् । इ॒च्छमांनाः ॥७

प्रऽवाच्यं । शश्वधा । वीर्यं । तत् । इंद्रस्य । कर्म । यत् । अहिं। विऽवृश्चत् ।।

वि। वज्रेण । परिऽसदः । जघान। आयन्। आपः । अयनं । इच्छमांनाः ॥७॥

योऽयमिंद्रोऽहिं मेघं विवृश्चत् उदकप्रेरणार्थं जघानेति यत्कर्म छेदनरूपं तदिदं तस्येंद्रस्य वीर्यं सामर्थ्यं शश्वधा सर्वदा प्रवाच्यं । प्रकर्षेण वचनीयं । तथा स इंद्रः परिषदः परितः सीदत आसीनान् प्रतिबंधकारिणोऽसुरान् वज्रेण वि जघान । अथायनं स्थानमिच्छमाना इच्छंत्य आप आयन् । यांति ॥ प्रवाच्यं । वच परिभाषण इत्यस्मादृहलोर्ण्यदिति ण्यत् । णित्त्वादुपधावृद्धिः । वचोऽशब्दसंज्ञायां । पा० ७. ३.६७. । इति कृत्वाभावः ।

व्यत्ययेनाद्युदात्तत्वं । यद्वा वाचयतेरचो यत् । यतोऽनाव इति स्वरः । शश्वधा। शश्वच्छब्दात्स्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्यः । विवृश्चत् । ओव्रश्चू छेदने । तुदादिः । लङि ग्रहिज्यावयीत्यादिना संप्रसारणं । सह सुपेत्यत्र सहेति योगविभागात्समासः । समासस्वरः । परिषदः । क्विप् । संहितायां सदेरप्रतेरिति षत्वं । जघान । हंतेर्लिटि णलि रूपं । निघातः । आयन् । अय गतावित्यस्य लङि रूपं । पादादित्वादनिघातः । इच्छमानाः । इषु इच्छायामित्यस्माद्व्यत्ययेन शानच । तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वरः ॥

ए॒तद्वचो॑ जरित॒र्मापि॑ मृष्ठा॒ आ यत्ते॒ घोषा॒नुत्त॑रा यु॒गानि॑ ।

उ॒क्थेषु॑ कारो॒ प्रति॑ नो जुषस्व॒ मा नो॒ नि कः॑ पुरुष॒त्रा नम॑स्ते ॥८

ए॒तत् । वचः॑ । ज॒रि॒तः॒ । मा । अपि॑ । मृ॒ष्ठाः॒ । आ । यत् । ते॒ । घोषा॑न् । उत्ऽत॑रा । यु॒गानि॑ ।

उ॒क्थेषु॑ । का॒रो॒ इति॑ । प्रति॑ । नः॒ । जु॒ष॒स्व॒ । मा । नः॒ । नि । कु॒रिति॑ कः । पु॒रु॒ष॒ऽत्रा । नमः॑ । ते॒ ॥८

एतत्। वचः।जरितः। मा। अपि। मृष्टाः। आ।यत्।ते। घोषान्। उत्तरा। युगानि।

उक्थेषु । कारो इति। प्रति। नः । जुषस्व। मा। नः । नि। करिति कः । पुरुषऽत्रा। नमः । ते ॥८॥

नद्यः प्रसंगादिंद्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचुः । जरितः स्तोतर्हे विश्वामित्र ते त्वदीयं यत्संवादात्मकं वचस्त्वं नोऽभीत्या घोषानुद्घोषयन्वर्तसे तद्वचो मापि मृष्ठाः। मा विस्मार्षीः । किं कारणं । उत्तरा युगान्युत्तरेषु याज्ञिकेषु युगेष्वहःसूक्थेषु कारो शस्त्राणां कर्तस्त्वं नोऽस्मान्प्रति

जुषस्व । संवादात्मकेन तेन वाक्येन प्रतिसेवस्व। इदानीं नोऽस्मान् पुरुषत्रा पुरुषेषु मा नि कः । उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुंवत् प्रागल्भ्यं मा कार्षीः । ते तुभ्यं नमः ॥ मृष्ठाः । मृजूष् शुद्धावित्यस्य लङि व्यत्ययेनात्मनेपदं । अदादित्वाच्छपो लुक् । व्रश्चादिना षत्वं । निघातः । घोषान् । घुषिर् संशब्दन इत्यस्य शतरि सर्वविधीनां छंदसि विकल्पितत्वादतो गुण इति पररूपत्वाभावः। सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः । युगानि । युजिर् योगे । उंछादिषु घञंतत्वेन निपातनादगुणत्वं । विशिष्टविषयं च निपातनमिष्यते । कालविशेषे रथाद्युपकरणे चेति तत्र पाठादेवांतोदात्तत्वं । कालाध्वनोरत्यंतसंयोग इति द्वितीया । कारो। करोतेः कृवापाजिमीत्यादिना उण्प्रत्ययः । आमंत्रितत्वान्निघातः । कः । करोतेर्लुङि च्लेर्मंत्रे घसेत्यादिना लुक् । हल्ङ्यादिना सिचो लोपः । न माङ्योग इत्यडभावः । पुरुषत्रा।

देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति सप्तम्यर्थे त्रा प्रत्ययः । प्रत्ययस्वरः ॥

ओ षु स्व॑सारः का॒रवे॑ शृणोत य॒यौ वो॑ दू॒रादन॑सा॒ रथे॑न ।

नि षू न॑मध्व॒ं भव॑ता सुपा॒रा अ॑धोअ॒क्षाः सि॑न्धवः स्रो॒त्याभिः॑ ॥९

ओ इति॑ । सु । स्व॒सा॒रः॒ । का॒रवे॑ । शृ॒णो॒त॒ । य॒यौ । व॒ः । दू॒रात् । अन॑सा । रथे॑न ।

नि । सु । न॒म॒ध्व॒म् । भव॑त । सु॒ऽपा॒राः । अ॒धः॒ऽअ॒क्षाः । सि॒न्ध॒वः॒ । स्रो॒त्याभिः॑ ॥९

ओ इति । सु। स्वसारः। कारवे। शृणोत। ययौ। वः। दूरात् । अनसा। रथेन।

नि । सु । नमध्वं । भवत । सुऽपाराः । अधःऽअक्षाः । सिंधवः । स्रोत्याभिः ॥९॥

विश्वामित्रो नदीः प्रत्युवाच । स्वसारो भगिन्यः सिंधवो हे नद्यः कारवे स्तोत्रं कुर्वाणस्य मम वचनं सु सुष्ठु ओ शृणोत । शृणुतैव । अनसा शकटेन रथेन च सह दूराद्विप्रकृष्टाद्देशाद्वो युष्मान्ययौ । प्राप्तोऽस्मि । यूयं सु सुष्टु नि नमध्वं । आत्मना स्वयं प्रह्वा भवत । तथा सुपाराः । रथादीनां तीरात्सुखेनावरोहणारोहणे यथा स्यातां तथा शोभनरोधसश्च भवत । किंच यूयं स्रोत्याभिः स्रवणशीलाभिरद्भिरधोअक्षा रथांगस्याक्षस्याधस्ताद्द्रवत । यदापोऽक्षस्याधस्ताद्द्रवंति तदा रथादीनि नेतुं शक्यंते । तस्मात्तत्परिमाणोदका भवतेत्यर्थाभिप्रायः ॥ ओ इति प्रगृह्यसंज्ञा । शृणोत । श्रु श्रवण इत्यस्य लोटि तप्रत्ययस्य तप्तनप्तनथनाश्चेति तबादेशः । पित्त्वाद्गुणः । निघातः । ययौ । यो प्रापण इत्यस्य भूतमात्रे लिट्युत्तमे णल्यात औ

णल इत्यौकारः। एकादेशस्वरः । वः । युष्मच्छब्दस्य द्वितीयाया बहुवचनस्य वस्नसाविति वसादेशः । षू। निपातस्येति संहितायां दीर्घः। नमध्वं । णमु प्रह्वत्वे शब्दे चेत्यस्य कर्मकर्तरि न दुहस्नुनमां यक्चिणाविति प्रतिषेधाद्यगभावः । अधोअक्षाः ।। अधरशब्दस्य पूर्वाधरावराणामसि पुरधवश्चैषामित्यसिप्रत्ययोऽधादेशश्च । अक्षशब्दोऽशू व्याप्तावित्यस्मादशेर्देवने । उ० ३.६५. । इति सप्रत्ययांतः । कृदुत्तरपदप्रकृतिस्वरः। सिंधवः । आमंत्रितत्वान्निघातः । स्रोत्याभिः । स्रोतःशब्दात्स्रोतसो विभाषा ड्यड्ड्यौ । पा°४. ४.११३.। इति ड्यप्रत्ययः । डित्त्वाट्टिलोपः । प्रत्ययस्वरः ॥

आ ते॑ कारो शृणवामा॒ वचां॑सि य॒याथ॑ दू॒रादन॑सा॒ रथे॑न ।

नि ते॑ नंसै पीप्या॒नेव॒ योषा॒ मर्या॑येव क॒न्यां शश्व॒चै ते॑ ॥१०

आ । ते । कारो इतिं । शृणवाम । वचांसि । ययाथं । दूरात् । अनंसा । रथेंन ।

नि । ते । नंसै । पीप्यानाऽइंव । योषां । मर्यांयऽइव । कन्यां । शश्वचै । त इतिं ते ॥१०

आ।ते। कारो इति । शृणवाम । वचांसि । ययाथ। दूरात् । अनसा। रथेन।

नि। ते। नंसे। पीप्यानाऽइव। योषा। मर्यायऽइव। कन्या। शश्वचै। त इति। ते ॥१०॥

नद्यः पूर्वं विश्वामित्रवाक्यं प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवुः । कारो स्तोत्रं कुर्वाण हे विश्वामित्र ते तव वचांसीमानि वाक्यान्या शृणवाम। शृणुमः । तव समीहितं प्रयोजनं कुर्म इत्यर्थः । अनसा शकटेन रथेन च सह ययाथ । यतो दूरादागतोऽसि । वयं च ते त्वदर्थं नि नंसै ।

नीचैर्नमाम । प्रत्येकविवक्षयात्रैकवचनं । रथेन गंतु गाधोदका भवामेत्यर्थः। तत्र दृष्टांतः। पीप्यानेव योषा। पीप्याना पुत्रं स्तनं पाययंती योषा माता यथा प्रह्वीभवति । दृष्टांतांतरं। यथा कन्या युवतिर्मर्यायेव मनुष्याय पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रा भवति तद्वत्ते त्वदर्थं प्रह्वीभवामः । ते इति पुनरुक्तिरादरार्थं । एतामृचं यास्क एवं व्याचष्टे। आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा । नि° २. २७.। इति ॥ कारो। संबुद्धौ शाकल्यस्येतौ । पा० १.१.१६.। इति प्रगृह्यसंज्ञा। शृणवाम । श्रु श्रवण इत्यस्य लोट्याडुत्तमस्य पिच्चेत्याडागमः । पित्त्वाद्गुणः । निघातः । ययाथ । या प्रापण इत्यस्य भूतमात्रे लिटिथल्येका च उपदेशेऽनुदात्तादितीट्प्रतिषेधः । लित्स्वरः । अनसा । सहार्थे तृतीया । नंसै । णमु प्रह्वत्व इत्यस्य लेट्युत्तमे लेटि सिब्बहुलमिति सिप् । वैतोऽन्यत्रेत्यैकारादेशः । निघातः ।

पीप्यानेव। पीङ् पान इत्यस्यांतर्भावितण्यर्थस्य लिटि कानचि रूपं । चित्स्वरः। योषा। यु मिश्रणे । वृतृवदिहनीत्यादिना । उ॰३.६२.। सप्रत्ययः । यौतीति योषा । वृषादित्वादाद्युदात्तः । शश्वचै । ष्वञ्ज परिष्वंग इत्यस्मात्संपदादिलक्षणो भावे क्विप् । पृषोदरादित्वादिष्टरूपसिद्धिरंतोदात्तश्च ॥ ॥ १३ ॥

यद॒ङ्ग त्वां भर॒ताः सं॒तरे॑युर्ग॒व्यन्ग्रामं॑ इषि॒त इन्द्रं॑जूतः ।

अर्षा॒दहं॑ प्रस॒वः सर्गं॑तक्त॒ आ वों॑ वृणे सुम॒तिं य॒ज्ञियां॑नाम् ॥ ११

यत् । अ॒ङ्ग । त्वा॒ । भ॒र॒ताः । स॒म्ऽतरे॑युः । ग॒व्यन् । ग्राम॑ः । इ॒षि॒तः । इन्द्रं॑ऽजूतः ।

अर्षात् । अहं । प्र॒ऽस॒वः । सर्गऽतक्तः । आ । व॒ः । वृ॒णे॒ ।
सु॒ऽम॒तिम् । य॒ज्ञियांनाम् ॥११

यत् । अंग। त्वा । भरताः । संऽतरेयुः । गव्यन्। ग्रामः ।
इषितः । इंद्रऽजूतः ।

अर्षात् । अहः। प्रऽसवः । सर्गऽतक्तः। आ। वः। वृणे।
सुऽमतिं। यज्ञियानां ॥११॥

विश्वामित्रो नदीः प्रत्युवाच । अंगेत्यामंत्रणे । हे नद्यो यद्यस्माद्युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञात तस्माद्भरता भरतकुलजा मदीयाः सर्वे त्वा परस्परमेकतामापन्नां नदीं त्वां संतरेयुः । सम्यगुत्तीर्ण भवेयुः । तदेव विशिनष्टि। गव्यन् गा उदकानि तरीतुमिच्छन्निषितस्त्वयाभ्यनुज्ञात इंद्रजूतो युष्माकं प्रवर्तकेनेंद्रेण च प्रेरितो ग्रामो भरतानां संघोऽर्षात् । संतरेत् । यतः सर्गतक्तो गमनाय प्रवृत्तः

प्रसवस्तेषामुद्योगोऽह पूर्वं युष्माभिरनुज्ञातः । अहं तु यज्ञियानां यज्ञार्हाणां वो युष्माकं सुमतिं शोभनां स्तुतिमा वृणे । सर्वतः संभजे ॥ भरताः ।
भरतशब्दादुत्सादित्वादञ् । तस्य यञञोश्चेति लुक् । अतच् प्रत्ययस्वरः। संतरेयुः । तरतेर्लिंङि जुसि रूपं । झेर्लसार्वधातुकस्वरे धातुस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । गव्यन् । गा आत्मन इच्छन्। सुपः क्यच् । एकादेशस्वरः। ग्रामः । ग्रसतेरा च । उ° १. १४२.। इति मन्प्रत्यय आकारादेशश्च । नित्स्वरः। इंद्रजूतः । जू इति सौत्रो धातुर्गत्यर्थः । श्र्युकः कितीति निष्ठायामिट्प्रतिषेधः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः । अर्षात् । ऋ गतावित्यस्य लेटि तिपि सिब्बहुलमिति सिप् । लेटोऽडागमः । एकाच इतीट्प्रतिषेधः । गुणः ।। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । वृणे । वृङ् संभक्तावित्यस्य लटि रूपं । यज्ञियानां । यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः । प्रत्ययस्वरः ॥

अतां॑रिषुर्भर॒ता ग॒व्यव॒ः सम॑भंक्त॒ विप्रः॑ सुम॒तिं न॒दीनां॑म् ।

प्र पिं॑न्वध्वमि॒षयं॑न्तीः सु॒राधा॒ आ व॒क्षणाः॑ पृ॒णध्वं॑ या॒त शीभं॑म् ॥१२

अतां॑रिषुः । भ॒र॒ताः । ग॒व्यवः॑ । सम् । अभं॑क्त । विप्रः॑ । सु॒ऽम॒तिम् । न॒दीनां॑म् ।

प्र । पि॒न्व॒ध्व॒म् । इ॒षयं॑न्तीः । सु॒ऽराधाः॑ । आ । व॒क्षणाः॑ । पृ॒णध्वं॑म् । या॒त । शीभं॑म् ॥१२

अतारिषुः । भरताः । गव्यवः । सं। अभक्त । विप्रः । सुऽमतिं । नदीनां।

प्र। पिन्वध्वं । इषयंतीः । सुऽराधाः। आ । वक्षणाः । पृणध्वं । यात। शीभं ॥१२॥

गव्यवो गा आत्मन इच्छंतो भरता भरतकुलजाः सर्वेऽतारिषुः । तां नदीं समतरन् । विप्रो मेधावी विश्वामित्रो नदीनां सुमतिं शोभनां स्तुतिं समभक्त । समभजत । यूयं तु यथा पूर्वमिषयंतीः कुल्यादिद्वारान्नं कुर्वाणा अत एव सुराधाः शोभनधनोपेता यूयं वक्षणाः कृत्रिमसरितः कुल्याः प्र पिन्वध्वं । प्रकर्षेण तर्पयत ।आ पृणध्वं । ताः सर्वतः पूरयत च । शीभं शीघ्रं यात। गच्छत च ॥ अतारिषुः । तॄ प्लवनतरणयोरित्यस्य लुङि सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः । अडागमस्वरः। गव्यवः । सुपः क्यच् । क्याच्छंदसीत्युप्रत्ययः । तस्य स्वरः ।। अभक्त । भज सेवायामित्यस्य लुङि सिचो झलो झलीति लोपः । पादादित्वादनिघातः । पिन्वध्वं । पिवि सेचन इत्यस्य लोटि रूपं । निघातः । इषयंतीः । इषं कुर्वत्यः । तत्करोतीति णिच् । णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावाट्टेरिति टिलोपः । वा छंदसीति सवर्णदीर्घः । प्रत्ययस्वरः । पृणध्वं । पृण प्रीणने

। लोटि रूपं । व्यत्ययेनात्मनेपदं । वाक्यभेदादनिघातः । यात । या प्रापण इत्यस्य लोटि रूपं । अत्रापि न निघातः । शीभं । शीभृ कत्थने। श्लाघ्यतेऽनेन तद्वानिति करणे घञ्। ञित्स्वरः ॥

उद्वं ऊ॒र्मिः शम्यां ह॒न्त्वापो॒ योक्त्रा॑णि मुञ्चत ।

मादु॑ष्कृतौ॒ व्ये॑नसा॒घ्न्यौ शू॒नमारं॑ताम् ॥१३

उत् । व॒ः । ऊ॒र्मिः । शम्या॑ः । ह॒न्तु॒ । आप॑ः । योक्त्रा॑णि । मु॒ञ्च॒त॒ ।

मा । अदु॑ःऽकृतौ । विऽए॑नसा । अ॒घ्न्यौ । शू॒नंम् । आ । अ॒र॒ता॒म् ॥१३

उत् । वः । ऊर्मिः । शम्याः । हंतु । आपः । योक्त्राणि । मुंचत।

रूपम् । चित्त्वादन्तोदात्तः । अभूषन् ।' भूष अलंकारे । भूवादिः । लङि रूपम् । यद्योगादनिघातः । भराय । “ हृञ् हरणे' । अधिकरणे घः । ‘ हृग्रहोर्भश्छन्दसि' इति हकारस्थ भकारः । वृषादित्वादाद्युदात्तः ॥

अ॒प्तूर्ये॑ मरुत आ॒पिरे॒षोऽमं॑द॒न्निंद्र॒मनु॒ दातिं॑वाराः ।

तेभिः॑ सा॒कं पिं॑बतु वृत्रखा॒दः सु॒तं सोमं॑ दा॒शुषः॒ स्वे स॒धस्थें॑ ॥९

अ॒प्ऽतूर्ये॑ । म॒रु॒तः॒ । आ॒पिः । ए॒षः । अमं॑न्दन् । इन्द्रं॑म् । अनुं॑ । दातिं॑ऽवाराः ।

तेभिः॑ । सा॒कम् । पि॒ब॒तु॒ । वृ॒त्र॒ऽखा॒दः । सु॒तम् । सोमं॑म् । दा॒शुषः॑ । स्वे । स॒धऽस्थें॑ ॥९

अप्ऽतूर्ये । मरुतः । आपिः । एषः । अमन्दन् । इन्द्रम् । अनु । दातिऽवाराः ।

तेभिः । साकम् । पिबतु । वृत्रऽखादः । सुतम् । सोमम् । दाशुषः । स्वे । सधऽस्थे ॥९

हे “मरुतः यः “एषः इन्द्रः “अप्तूर्ये अपां प्रेरणे "आपिः युष्माकं सखा सन् वर्तते "दातिवाराः। वारो वरणीयं बलं धनं वा । दत्तबला दत्तधना वा । ते मरुतस्तम् “इन्द्रमनु “अमन्दन् अहृष्यन् । “वृत्रखादः वृत्रस्य हिंसकः स इन्द्रः “तेभिः तैर्मरुद्भिः “साकं “दाशुषः हविर्दत्तवतो यजमानस्य “स्वे स्वकीये “सधस्थे । सह तिष्ठन्त्यस्मिन्निति सधस्थं गृहम् । तस्मिन् “सुतम् अभिषुतं “सोमं “पिबतु ॥ अप्तूर्ये । ' तूरी त्वराहिंसयोः' इत्यस्मात् “ अघ्न्यादयश्च ' इति यत्प्रत्ययः । यतोऽनावः' इत्याद्युदात्तः । समासे कृदुत्तरपदस्वरः । अमन्दन् । मदि स्तुत्यादिषु । परस्मैपदी

। पादादित्वादनिघातः । वृत्रखादः । ‘ खादृ भक्षणे '। कर्मण्यण् । दाशुषः । दाशृ दाने ' इत्यस्य क्वसौ ' दाश्वान्साह्वान्मीढ्वांश्च ' इति द्विर्वचनाद्यभावः । वसोः संप्रसारणम् । प्रत्ययस्वरः । सधस्थे । ‘ सध मादस्थयोश्छन्दसि ' इति सहस्य सधादेशः ॥

इ॒दं ह्यन्वोज॑सा सु॒तं रा॑धानां पते ।

पिबा॒ त्व१॒॑स्य गिर्॑वणः ॥१०

इ॒दम् । हि । अनु॑ । ओज॑सा । सु॒तम् । रा॒धा॒ना॒म् । प॒ते॒ ।

पिब॑ । तु । अ॒स्य । गि॒र्व॒ण॒ः ॥१०

इदम् । हि । अनु । ओजसा । सुतम् । राधानाम् । पते ।

पिब । तु । अस्य । गिर्वणः ॥१०

हे "राधानां “पते धनानां स्वामिन् “गिर्वणः गीर्भिः स्तुतिभिर्वननीय हे इन्द्र “इदम् “अनु अनेनानुक्रमेण । उद्देशानुक्रमेणेत्यर्थः । "ओजसा बलेन ग्रावभिः “सुतम् अभिषुतम् “अस्य इमं सोमं “तु क्षिप्रं “पिब “हि ॥

यस्ते॒ अनु॑ स्व॒धामस॑त्सु॒ते नि य॑च्छ त॒न्व॑म् ।

स त्वा॑ ममत्तु सो॒म्य॑म् ॥११

यः । ते॒ । अनु॑ । स्व॒धाम् । अस॑त् । सु॒ते । नि । य॒च्छ॒ । त॒न्व॑म् ।

सः । त्वा॒ । म॒म॒त्तु॒ । सो॒म्यम् ॥११

यः । ते । अनु । स्वधाम् । असत् । सुते । नि । यच्छ । तन्वम् ।

सः । त्वा । ममत्तु । सोम्यम् ॥११

हे इन्द्र 'ते त्वदर्थं “यः सोमः “स्वधाम् अन्नम् “अनु अनुसृत्य ग्रावभिरभिषुतः “असत् “सुते तस्मिन् सोमे “तन्वं स्वकीयं शरीरं “नि “यच्छ प्रेरय । “सः सोमः “सोम्यं सोमार्हं “त्वा त्वां “ममत्तु मादयतु ॥ असत् । अस्तेर्लेट्यडागमे रूपम् । यद्वृत्तयोगादनिघातः। आगमस्यानुदात्तत्वे धातुस्वरः ॥

प्र तें अश्नोतु कु॒क्ष्योः प्रेंद्र॒ ब्रह्मं॑णा॒ शिरः॑ ।

प्र बा॒हू शूं॑र॒ राधंसे ॥१२

प्र । ते॒ । अ॒श्नो॒तु॒ । कु॒क्ष्योः । प्र । इ॒न्द्र॒ । ब्रह्मं॑णा । शिरः॑ ।

प्र । बा॒हू इतिं । शू॒र॒ । राधंसे ॥१२

प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र । ब्रह्मणा । शिरः ।

प्र । बाहू इति । शूर । राधसे ॥१२

हे “इन्द्र स सोमः “ते तव “कुक्ष्योः कुक्षेरुभयोः पार्श्वयोः उभौ पार्श्वौ “प्र “अश्नोतु प्रकर्षेण व्याप्नोतु । तथा “ब्रह्मणा स्तोत्रेण सहितः स सोमः “शिरः शरीरम् । अवयवादिनावयवी लक्ष्यते । त्वच्छरीरं “प्र अश्नोतु । है “शूर इन्द्र “राधसे धनाय तव "बाहू अपि “प्र अश्नोतु ॥ अश्नोतु । अशू व्याप्तौ ' इस्यस्य लोटि व्यत्ययेन परस्मैपदम् । निघातः । कुक्ष्योः । ‘ उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥ ॥ १६ ॥

**टिप्पणी**

३.५१.१० इदं ह्यनु ओजसा इति

द्र. घृतश्चुन्निधनम्

## मण्डल ३

# ऋग्वेदः सूक्तं ३.५२

← सूक्तं ३.५१

ऋग्वेदः - मण्डल ३

सूक्तं ३.५२

गाथिनो विश्वामित्रः

सूक्तं ३.५३ →

## दे. इन्द्रः। त्रिष्टुप्, १-४ गायत्री, ६ जगती

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।

इन्द्र प्रातर्जुषस्व नः ॥१॥

पुरोळाशं पचत्यं जुषस्वेन्द्रा गुरस्व च ।

तुभ्यं हव्यानि सिस्रते ॥२॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः ।

वधूयुरिव योषणाम् ॥३॥

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः ।

इन्द्र क्रतुर्हि ते बृहन् ॥४॥

माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।

प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥५॥

तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।

ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः ॥६॥

पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः ।

अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥७॥

प्रति धाना भरत तूयमस्मै पुरोळाशं वीरतमाय नृणाम् ।

दिवेदिवे सदृशीरिन्द्र तुभ्यं वर्धन्तु त्वा सोमपेयाय धृष्णो ॥८॥

**सायणभाष्यम्**

‘ धानावन्तम् ' इत्यष्टर्चं चतुर्दशं सूक्तं वैश्वामित्रमैन्द्रम् । अत्रेयमनुक्रमणिका-’ धानावन्तमष्टौ पूर्वार्धं गायत्रं षष्ठी जगती ' इति । आदितश्चतस्रो गायत्र्यः तृतीये धानाः' इति षष्ठी जगती शिष्टास्त्रिष्टुभः । सूक्तविनियोगो लिङ्गादवगन्तव्यः । प्रातःसवनीयपुरोडाशस्यानुवाक्या ‘ धानावन्तम् इत्याद्या । सूत्रितं च-’ धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या' (आश्व. श्रौ. ५.४) इति ॥

धा॒नावं॑तं कर॒म्भिणं॑मपू॒पवं॑तमु॒क्थिनं॑ ।

इंद्रं॑ प्रा॒तर्जु॑षस्व नः ॥१

धा॒ना॒ऽवं॑न्तम् । क॒र॒म्भिणं॑म् । अ॒पू॒प॒ऽवं॑न्तम् । उ॒क्थिनं॑म् ।

इन्द्रं । प्रा॒तः । जु॒ष॒स्व॒ । न॒ः ॥१

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् ।

इन्द्र । प्रातः । जुषस्व । नः ॥१

हे “इन्द्र “धानावन्तम् । धाना भृष्टयवाः । तद्वन्तं "करम्भिणम् । करम्भो दधिमिश्राः सक्तवः। तद्वन्तम् “अपूपवन्तं सवनीयपुरोडाशोपेतम् “उक्थिनं शस्त्रिणं “नः अस्मदीयमिमं सोमं “प्रातः प्रातःसवने "जुषस्व सेवस्व ॥ प्रातः । स्वरादिषु अन्तोदात्तत्वेन पठितत्वादन्तोदात्तः ॥

पु॒रो॒ळाशं॑ पच॒त्यं॑ जु॒षस्वे॒न्द्रा गु॑रस्व च ।

तुभ्यं॑ ह॒व्यानि॑ सिस्रते ॥२

पु॒रो॒ळाशं॑म् । प॒च॒त्यं॑म् । जु॒षस्वं॑ । इ॒न्द्र॒ । आ । गु॒र॒स्व॒ । च॒ ।

तुभ्यं॑म् । ह॒व्यानिं॑ । सि॒स्र॒ते॒ ॥२

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ । गुरस्व । च ।

तुभ्यम् । हव्यानि । सिस्रते ॥२

हे “इन्द्र “पचत्यं पचने साधुं “पुरोडाशम् । पुरो दाशन्त एनमिति पुरोडाशो हविः। “जुषस्व । किंच “आ “गुरस्व । पुरोडाशभक्षणार्थमुद्यमं कुरु । "हव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि “तुभ्यं त्वदर्थं “सिस्रते आहवनीयं गच्छन्ति । तानि सेवस्वेति भावः ॥ पचत्यम् । पचतशब्दात् तत्र साधुः' इति यत्प्रत्ययान्तस्य पदस्य द्व्यच्त्वाभावात् अत्र ‘ यतोऽनावः' इत्यस्य प्राप्तिर्नास्ति ।

तित्स्वरितः । गुरस्व ।' गुरी उद्यमने '। शविकरणी ।
निघातः । सिस्रते । ‘ सृ गतौ । छन्दसि जुहोत्यादिः ।
व्यत्ययेनात्मनेपदम् ॥

पु॒रो॒ळाशं॑ च नो॒ घसो॑ जो॒षयां॑से॒ गिर॑श्च नः ।

व॒धू॒युरि॑व॒ योषं॑णां ॥३

पु॒रो॒ळाशं॑म् । च॒ । न॒ः । घस॑ः । जो॒षयां॑से । गिर॑ः । च॒ । न॒ः
।

व॒धू॒युःऽइं॑व । योषं॑णाम् ॥३

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः
।

वधूयुःऽइव । योषणाम् ॥३

हे इन्द्र “नः अस्मत्संबन्धिनं “पुरोडाशं “घसः भक्षय “च । “नः अस्मदीयाः स्तुतिलक्षणाः “गिरश्च' “जोषयासे सेवस्व' । तत्र दृष्टान्तः । “वधूयुरिव “योषणाम् । यथा वधूयुः स्त्रीकामो योषणां भजनीयां युवतिं सेवते तद्वत् ॥ घसः । ‘ घस्लृ अदने ' इत्यस्य लेट्यडागमे रूपम् । ‘ चवायोगे प्रथमा ' इति न निघातः । जोषयासे । ‘ जुषी प्रीतिसेवनयोः' इत्यस्य ण्यन्तस्य लेट्याडागमे रूपम् । आगमस्यानुदात्तत्वे णिच्स्वरः । पादादित्वादनिघातः । वधूयुरिव । ‘सुप आत्मनः क्यच्'।' क्याच्छन्दसि ' इत्युप्रत्ययः । प्रत्ययस्वरः । योषणाम् । ‘ युष भजने ' इति सौत्रो धातुः । ‘ कृत्यल्युटो बहुलम्' इति ल्युट् । लित्स्वरः ॥

पु॒रो॒ळाशं॑ सनश्रुत प्रातःसा॒वे जुं॑षस्व नः ।

इंद्र॒ क्रतु॒र्हि तें बृ॒हन् ॥४

पु॒रो॒ळाशं॑म् । स॒न॒ऽश्रु॒त॒ । प्रा॒तः॒ऽसा॒वे । जु॒ष॒स्व॒ । न॒ः ।

इन्द्रं॑ । क्रतुः॑ । हि । ते॒ । बृ॒हन् ॥४

पुरोळाशम् । सनऽश्रुत । प्रातःऽसावे । जुषस्व । नः ।

इन्द्र । क्रतुः । हि । ते । बृहन् ॥४

हे “सनश्रुत पुराणतया प्रसिद्ध हे “इन्द्र “नः अस्मत्संबन्धिनमिमं “पुरोडाशं “प्रातःसावे । सूयतेऽत्र सोम इति सावः । तस्मिन् प्रातःसवने "जुषस्व । यतः “ते तव "क्रतुः कर्म “बृहन् महत् “हि ॥ प्रातःसावे ।' षुञ् अभिषवे' । कर्मणि घञ् । प्रादिसमासः । थाथादिस्वरेणान्तोदात्तः ॥

माध्यदिनसवने, सवनीयपुरोडाशस्य माध्यंदिनस्य सवनस्य धानाः' इत्यनुवाक्या। सूत्रितं च -- माध्यंदिनस्य सवनस्य धाना इति माध्यंदिने ' (आश्व. श्रौ. ५. ४ ) इति ॥

माध्यंदिनस्य् सवंनस्य धानाः पुंरोळाशंमिंद्र कृष्वेह चारुं ।

प्र यत्स्तोता जंरिता तूर्ण्यंर्थो वृषायमांण उपं गीर्भिरीट्टें ॥५

माध्यंन्दिनस्य । सवंनस्य । धानाः । पुरोळाशंम् । इन्द्र । कृष्व । इह । चारुंम् ।

प्र । यत् । स्तोता । जरिता । तूर्णिंऽअर्थः । वृषऽयमांणः । उपं । गीःऽभिः । ईट्टें ॥५

माध्यन्दिनस्य । सवनस्य । धानाः । पुरोळाशम् । इन्द्र । कृष्व । इह । चारुम् ।

प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः । वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥५

हे "इन्द्र “माध्यंदिनस्य मध्यंदिने भवस्य "सवनस्य संबन्धिनीः “धानाः भृष्टयवान् “चारुं कमनीयं “पुरोडाशं च “इह कर्मणि आगत्य "कृष्व भक्षणेन संस्कुरु । “यत् यदा "जरिता भवत्परिचरणं कुर्वाणः “तूर्ण्यर्थः त्वां स्तोतुमितस्ततस्त्वरितगमनः अत एव “वृषायमाणः वृषेवाचरन् “स्तोता “गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः “उप समीपे “प्र “ईट्टे प्रकर्षेण स्तौति । तदा पुरोडाशादिहवींषि भक्षयेति भावः ॥ माध्यंदिनस्य । मध्यंदिनशब्दात् तत्र भवार्थे उत्सादित्वादञ् । ञित्वादाद्युदात्तः। चारुम् । ‘चर गतिभक्षणयोः'। ‘दृसनिजनिचरिचटिरहिभ्यो ञुण्' इति ञुण् । णित्त्वादुपधादिवृद्धिः। ञित्वादाद्युदात्तः । तूर्ण्यर्थः । तूर्णिः । ञित्वरा संभ्रमे ' इत्यस्मात् ' वहिश्रि° ' इत्यादिना निप्रत्ययो निच्च । अर्थः । ‘ऋ गतौ ।

‘उषिकुषिगार्तिभ्यस्थन् ' इति थन् । बहुव्रीहौ पूर्वपदस्वरः । वृषायमाणः । वृषेवाचरतीत्यर्थे ' कर्तुः क्यङ् सलोपश्च' इति क्यङ् । ‘अकृत्सार्वधातुकयोर्दीर्घः । ङित्त्वात् ‘अनुदात्तङितः' इत्यात्मनेपदम् । लट् । शानच् । तस्य लसार्वधातुकस्वरे धातुस्वरः । ईट्टे। ‘ईड स्तुतौ ' इत्यस्य लटि रूपम् । यद्योगादनिघातः ॥ ॥ १७ ॥

तृतीयसवने सवनीयपुरोडाशस्य तृतीये धानाः' इत्यनुवाक्या। सूत्रितं च- तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने ' ( आश्व. श्रौ. ५. ४ ) इति ॥

तृ॒तीये॑ धा॒नाः सव॑ने पुरुष्टुत पुरो॒ळाश॒माहु॑तं मामहस्व नः ।

ऋ॒भु॒मंत॒ं वाजं॑वंतं त्वा कवे॒ प्रयं॑स्वंत॒ उपं॑ शिक्षेम धी॒तिभि॑ः ॥६

तृ॒तीये॑ । धा॒नाः । सव॑ने । पु॒रु॒ऽस्तु॒त॒ । पु॒रो॒ळाशं॑म् । आऽहुं॑तम् । म॒म॒ह॒स्व॒ । न॒ः ।

ऋ॒भु॒ऽमन्तं॑म् । वाजं॑ऽवन्तम् । त्वा॒ । क॒वे॒ । प्रयं॑स्वन्तः । उपं॑ । शि॒क्षे॒म॒ । धी॒तिऽभिः॑ ॥६

तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् । ममहस्व । नः ।

ऋभुऽमन्तम् । वाजऽवन्तम् । त्वा । कवे । प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥६

हे "पुरुष्टुत पुरुभिर्बहुभिः स्तोतृभिः स्तुत हे इन्द्र “तृतीये "सवने "नः अस्मदीयान् “धानाः हुतान् भृष्टयवान् “आहुतं “पुरोळाशं च "मामहस्व भक्षणेन महय संभावय । हे "कवे इन्द्र "प्रयस्वन्तः संभृतहविष्का वयम् “ऋभुमन्तम् । ऋभवो ये केचन देवास्तद्वन्तं “वाजवन्तम् । वाजो नाम

सुधन्वनः पुत्रस्तद्वन्तं “त्वा त्वां “धीतिभिः स्तुतिभिः “उप “शिक्षेम समीपे परिचरेम ॥ आहुतम् । जुहोतेः कर्मणि क्तः । ‘ गतिरनन्तरः' इति गतेः स्वरः । मामहस्व । मह पूजायाम् ' इत्यस्य यङ्लुगन्तस्य लोटि व्यत्ययेनात्मनेपदम् । शपो लुगभावश्छान्दसः । शिक्षेम । शिक्षतेः आशीर्लिङि • लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । निघातः । धीतिभिः । ‘ हिष्ठवत्सरतिशत्थान्तानाम् । इत्यन्तोदात्तत्वम् ॥

पू॒ष॒ण्वते॑ ते चकृमा कर॒ंभं हरि॑वते॒ हर्य॑श्वाय धा॒नाः ।

अ॒पू॒पम॑द्धि॒ सग॑णो म॒रुद्भिः॒ सोमं॑ पिब वृत्र॒हा शू॑र वि॒द्वान् ॥ ७

पू॒ष॒ण्ऽवते॑ । ते॒ । च॒कृ॒म॒ । क॒र॒म्भम् । हरि॑ऽवते ।
हरि॑ऽअश्वाय । धा॒नाः ।

अ॒पू॒पम् । अ॒द्धि॒ । सऽगं॑णः । म॒रुत्ऽभिः॑ । सोमं॑म् । पि॒ब॒ । वृ॒त्र॒ऽहा । शू॒र॒ । वि॒द्वान् ॥७

पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः ।

अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥७

हे इन्द्र "पूषण्वते । पूषा नाम कश्चिद्देवोऽदन्तकः । तद्वते "ते तुभ्यं "करम्भं दधिमिश्रं सक्तुं "चकृम भक्षणार्थं कुर्मः। तथा च श्रुतिः- पूषा प्रपिष्टभागोऽदन्तको हि' (तै. सं. २.६.८.५) इति । हरिवते । हरिनामकावश्वौ तद्वते "हर्यश्वाय हरितवर्णाश्वयुक्तायेन्द्राय तुभ्यं धानाः चकृम भक्षणार्थं कुर्मः। तथा च मन्त्रवर्णः-'ग्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः' (ऋ. सं. ३.३५.३) इति । "मरुद्भिः "सगणः त्वम् "अपूपं पुरोडाशम् "अद्धि भक्षय

। हे “शूर असहाय हे इन्द्र “वृत्रहा वृत्रस्य हन्ता “विद्वान् सर्वं जानानस्त्वं “सोमं “पिब ॥ पूषण्वते । पूषशब्दस्य मतुप् ।' अनो नुट्' इति नुडागमः । ‘ रषाभ्याम् ' इति णत्वम् । चकृम । करोतेश्छान्दसे वर्तमाने लिटि क्रादित्वात् इडभावः । निघातः । हरिवते । छन्दसीरः' इति मतुपो वत्वम् ॥

प्रतिं धा॒ना भंरत॒ तूयंमस्मै पुरो॒ळाशं वी॒रतंमाय नृ॒णां ।

दि॒वेदिंवे स॒दृशींरिंद्र॒ तुभ्य॒ं वर्धंतु त्वा सोम॒पेयांय धृष्णो ॥८

प्रतिं । धा॒नाः । भ॒र॒त॒ । तूयंम् । अ॒स्मै॒ । पु॒रो॒ळाशंम् । वी॒रऽतंमाय । नृ॒णाम् ।

दि॒वेऽदिंवे । स॒ऽदृशीः॑ । इ॒न्द्र॒ । तुभ्यंम् । वर्धंन्तु । त्वा॒ । सो॒म॒ऽपेयांय । धृ॒ष्णो॒ इतिं ॥८

प्रति । धानाः । भरत । तूयम् । अस्मै । पुरोळाशम् । वीरऽतमाय । नृणाम् ।

दिवेऽदिवे । सऽदृशीः । इन्द्र । तुभ्यम् । वर्धन्तु । त्वा । सोमऽपेयाय । धृष्णो इति ॥८

यजमानोऽध्वर्य्वादीन् प्रति ब्रूते । हे अध्वर्य्वादयः “अस्मै इन्द्राय “धानाः “तूयं क्षिप्रं “प्रति “भरत संपादयत । “नृणां “वीरतमाय अस्मै इन्द्राय “पुरोडाशं च संपादयत । अथ प्रत्यक्षकृतः। हे “धृष्णो शत्रूणामभिभवनशील हे “इन्द्र “सदृशीः एकविधाः स्तुतयः “तुभ्यं त्वदर्थं "दिवेदिवे प्रतिदिवसम् अस्माभिः क्रियन्ते । ताः स्तुतयः “सोमपेयाय सोमपानार्थं “त्वा त्वां “वर्धन्तु उत्साहेन प्रवृद्धं कुर्वन्तु ॥ सदृशीः ।' समानान्ययोश्च' इति कञ्प्रत्ययः । ‘टिड्ढाणञ्' इत्यादिना ङीप् ।' दृग्दृशवतुषु ' इति समानस्य सभावः ॥ ॥ १८ ॥

**टिप्पणी**

३.५२.१ धानावन्तं करम्भिणं इति

द्र. पौषम्

अथातः श्रवणाकर्म। श्रावण्यां पौर्णमास्याम्। स्थालीपाकं श्रपयित्वाऽक्षतधानाश्चैककपालम् पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति ।.....स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति । धानावन्तमिति धानानाम्। ....पारस्करगृह्यसूत्रम् २.१४.७

करम्भोपरि टिप्पणी

# ऋग्वेदः सूक्तं ३.५३



दे. इन्द्रः, १ इन्द्रापर्वतौ, १५, १६ वाक् (ससर्परी), १७-२० रथाङ्गानि, २१-२४ अभिशापः। त्रिष्टुप्, १0, १६ जगती, १३ गायत्री, १२, २०, २२ अनुष्टुप्, १८ बृहती

---

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।

वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥१॥

तिष्ठा सु कं मघवन्मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि ।

पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ॥२॥

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।

एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम् ॥३॥

जायेदस्तं मघवन्सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु ।

यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥४॥

परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम् ।

यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥५॥

अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।

यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥६॥

इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः ।

विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरन्त आयुः ॥७॥

रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम् ।

त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥८॥

महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात्सिन्धुमर्णवं नृचक्षाः ।

विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥९॥

हंसा इव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा ।

देवेभिर्विप्रा ऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्यं मधु ॥१०॥

उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः ।

राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः ॥११॥

य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।

विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥१२॥

विश्वामित्रा अरासत ब्रह्मेन्द्राय वज्रिणे ।

करदिन्नः सुराधसः ॥१३॥

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।

आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥१४॥

ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता ।

आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥१५॥

ससर्परीरभरत्तूयमेभ्योऽधि श्रवः पाञ्चजन्यासु कृष्टिषु ।

सा पक्ष्या नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः ॥१६॥

स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि ।

इन्द्रः पातल्ये ददतां शरीतोररिष्टनेमे अभि नः सचस्व ॥१७॥

बलं धेहि तनूषु नो बलमिन्द्रानळुत्सु नः ।

बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि ॥१८॥

अभि व्ययस्व खदिरस्य सारमोजो धेहि स्पन्दने शिंशपायाम् ।

अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः ॥१९॥

अयमस्मान्वनस्पतिर्मा च हा मा च रीरिषत् ।

स्वस्त्या गृहेभ्य आवसा आ विमोचनात् ॥२०॥

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।

यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥२१॥

परशुं चिद्धि तपति शिम्बलं चिद्धि वृश्चति ।

उखा चिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति ॥२२॥

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।

नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति ॥२३॥

इम इन्द्र भरतस्य पुत्रा अपपित्वं चिकितुर्न प्रपित्वम् ।

हिन्वन्त्यश्वमरणं न नित्यं ज्यावाजं परि णयन्त्याजौ ॥२४॥

**सायणभाष्यम्**

‘इन्द्रापर्वता' इति चतुर्विंशत्यृचं पञ्चदशं सूक्तम् । अत्रेयमनुक्रमणिका- इन्द्रापर्वता चतुर्विंशतिराद्यैन्द्रापार्वती पञ्चदश्यादिद्वे वाचे संसर्पर्यै चतस्रो रथाङ्गस्तुतयोऽन्त्या अभिशापास्ता वसिष्ठद्वेषिण्यो न वसिष्ठाः शृण्वन्ति । दशमीषोडश्यौ जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्योऽनुष्टुभोऽष्टादशी बृहती ' इति । विश्वामित्र ऋषिः । दशमी षोडशी च द्वे जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभोऽष्टादशी बृहती शिष्टास्त्रिष्टुभः। आद्येन्द्रापर्वतदेवताका पञ्चदशीषोडश्यौ वाग्देवत्ये तदुत्तराश्चतस्रो रथाङ्गदेवताकाः शिष्टा ऐन्द्र्यः ॥

इंद्रा॑पर्वता बृह॒ता रथे॑न वा॒मीरिष॒ आ व॑हतं सु॒वीराः॑ ।

वी॒तं ह॒व्यान्य॑ध्व॒रेषु॑ देवा॒ वर्धे॑थां गी॒र्भिरिळ॑या॒ मद॑ता ॥१

इन्द्रा॑पर्वता । बृ॒ह॒ता । रथे॑न । वा॒मीः । इषः॑ । आ । व॒ह॒त॒म् । सु॒ऽवीराः॑ ।

वी॒तम् । ह॒व्यानि॑ । अ॒ध्व॒रेषु॑ । दे॒वा॒ । वर्धे॑थाम् । गी॒ःऽभिः । इळ॑या । मद॑न्ता ॥१

इन्द्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतम् । सुऽवीराः ।

वीतम् । हव्यानि । अध्वरेषु । देवा । वर्धेथाम् । गीःऽभिः । इळया । मदन्ता ॥१

“इन्द्रापर्वता इन्द्रश्च पर्वतश्च । हे इन्द्रापर्वतौ "बृहता “रथेन आगत्य “वामीः वननीयाः “सुवीराः शोभनपुत्रोपेताः “इषः अन्नानि “आ “वहतम् अस्मदर्थं धारयतम् । प्रयच्छतमित्यर्थः । किंच हे देवौ द्योतमानौ “अध्वरेषु अस्मत्संबन्धिषु यज्ञेषु “हव्यानि हवनयोग्यानि

पुरोडाशादीनि हवींषि “वीतं भक्षयतम् । तथा “इळया अस्माभिर्दत्तेन हविषा “मदन्ता हृष्यन्तौ युवां “गीर्भिः स्तुतिलक्षणाभिः अस्मदीयाभिर्वाग्भिः “वर्धेथां समृद्धौ भवतम् ॥ इन्द्रापर्वता । आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । सुवीराः । बहुव्रीहौ ‘वीरवीर्यौ च ' इत्युत्तरपदाद्युदात्तत्वम् । वीतम् । वी कान्त्यादिषु इत्यस्य लोटि अदादित्वाच्छपो लुक् । प्रत्ययस्वरः । वर्धेथाम् । ‘वृधु वृद्धौ ' इत्यस्य लोटि आथामो लसार्वधातुकस्वरे धातुस्वरः ॥

अहर्गणेष्वन्त्यवर्जितेष्वहःसु हारियोजनस्य ‘तिष्ठा सु कम्' इत्यनुवाक्या । सूत्रितं च-- ‘ तिष्ठा सु कं मघवन्मा परागा अयं यज्ञो देवया अयं मियेधः ' ( आश्व. श्रौ. ६. ११ ) इति ।

तिष्ठा॒ सु कं॑ मघव॒न्मा परा॑ गाः॒ सोम॑स्य॒ नु त्वा॒ सुषु॑तस्य यक्षि ।

पि॒तुर्न पु॒त्रः सिच॒मा र॑भे त॒ इंद्र॒ स्वादि॑ष्ठया गि॒रा श॑चीवः ॥ २

तिष्ठ॑ । सु । क॒म् । म॒घ॒ऽव॒न् । मा । परा॑ । गाः॒ । सोम॑स्य । नु । त्वा॒ । सुऽसु॑तस्य । य॒क्षि॒ ।

पि॒तुः । न । पु॒त्रः । सिच॑म् । आ । र॒भे॒ । ते॒ । इन्द्र॑ । स्वादि॑ष्ठया । गि॒रा । श॒ची॒ऽव॒ः ॥२

तिष्ठ । सु । कम् । मघऽवन् । मा । परा । गाः । सोमस्य । नु । त्वा । सुऽसुतस्य । यक्षि ।

पितुः । न । पुत्रः । सिचम् । आ । रभे । ते । इन्द्र । स्वादिष्ठया । गिरा । शचीऽवः ॥२

हे मघवन् धनवन्निन्द्र “कं सुखेनास्मिन् यज्ञे "सु “तिष्ठ सुष्ठु कंचित्कालमत्र तिष्ठ । “मा “परा "गाः अस्मदीयाद्यज्ञान्मा गच्छ । तत्र कारणमाह । “सुषुतस्य सुष्ठ्वभिषुतेन “सोमस्य सोमेन “नु क्षिप्रं “त्वा त्वां “यक्षि यजे । हे "शचीवः शक्तिमन् “इन्द्र “ते तव “सिचं वस्त्रप्रान्तं “स्वादिष्ठया स्वादुतरया स्तुतिलक्षणया “गिरा “आ “रभे आलभे । गृह्णामीत्यर्थः । तत्र दृष्टान्तः । “पितुर्न । यथा "पुत्रः मधुरया वाचा पितुर्जनकस्य चेलाञ्चलं गृह्णाति तद्वत् ॥ सु कमिति निपातद्वयम् । प्रथमस्य ‘ निपाता आद्युदात्ताः' इत्याद्युदात्तत्वम्। द्वितीयस्य ' चादयोऽनुदात्ताः' इत्यनुदात्तत्वम् ।' सोमस्य यक्षि । ‘ यज देवपूजासंगतिकरणदानेषु'। ‘ स्वरितञितः०' इत्यात्मनेपदम् । तस्य लुङि सिचि “ एकाचः०' इतीट्प्रतिषेधः । व्रश्चादिना षत्वम् । षढोः कः सि' इति कत्वम् । सिचः सकारस्य षत्वम् । निघातः । रभे । ‘डुलभष् प्राप्तौ'। लट्युत्तम इटि रूपम् । रलयोरभेदः ।

निघातः । स्वादिष्ठया । स्वादुशब्दादिष्ठनि रूपम् । नित्त्वादाद्युदात्तः ।।

शंसा॑वाध्वर्यो॒ प्रति॑ मे गृणी॒ही॑द्रा॑य॒ वाहः॑ कृणवाव॒ जुष्टं॑ ।

एदं ब॒र्हिर्यजं॑मानस्य सी॒दाथां॑ च भूदु॒क्थमिं॑द्रा॑य श॒स्तं ॥३

शंसा॑व । अ॒ध्व॒र्यो॒ इति॑ । प्रति॑ । मे॒ । गृ॒णी॒हि॒ । इन्द्रा॑य । वाहः॑ । कृ॒ण॒वा॒व॒ । जुष्ट॑म् ।

आ । इ॒दम् । ब॒र्हिः । यजं॑मानस्य । सी॒द॒ । अथं॑ । च॒ । भू॒त् । उ॒क्थम् । इन्द्रा॑य । श॒स्तम् ॥३

शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः । कृणवाव । जुष्टम् ।

आ । इदम् । बर्हिः । यजमानस्य । सीद । अथ । च । भूत् । उक्थम् । इन्द्राय । शस्तम् ॥३

शंसिष्यन् होताध्वर्युं ब्रूते । हे अध्वर्यो आवां “शंसाव । होतस्त्वमेव शंससि । कथमहं शंसानि । अत आह । “प्रति “मे “गृणीहि इति । त्वं मे प्रतिगृणीहि ।' ओथामोदैव' इत्यादिकः होतुरुत्साहजननः प्रतिगरः ( आश्व. श्रौ. ७. ११ )। तं दत्स्व' । तथा “इन्द्राय “जुष्टं प्रीतियुक्तं “वाहः स्तोत्रं “कृणवाव करवाव। त्वं “यजमानस्य “इदं “बर्हिः अस्मिन् बर्हिषि “आ “सीद उपविश । “अथ “च अनन्तरम् “इन्द्राय इन्द्रार्थमावाभ्यां क्रियमाणम् “उक्थं शस्त्रं “शस्तं प्रशस्तं “भूत् भवतु ॥ शंसाव । 'शंसु स्तुतौ ' इत्यस्य लोट्युत्तमद्विवचने रूपम् । ‘ आडुत्तमस्य° ' इत्याडागमः । उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः । मे। ‘ अनुप्रतिगृणश्च ' (

पा: सू: १. ४. ४१ ) इति संप्रदानसंज्ञा । जुष्टम् । नित्यं मन्त्रे' इत्याद्युदात्तत्वम् ॥

जा॒येदस्तं॑ मघव॒न्त्सेदु॒ योनि॒स्तदित्त्वा॑ यु॒क्ता हर॑यो वह॑न्तु ।

य॒दा क॒दा च॑ सु॒नवा॑म॒ सोमं॑म॒ग्निष्ट्वा॑ दू॒तो धं॑न्वा॒त्यच्छं॑ ॥४

जा॒या । इत् । अस्तं॑म् । म॒घ॒ऽव॒न् । सा । इत् । ऊं॒ इतिं॑ । योनिः॑ । तत् । इत् । त्वा॒ । यु॒क्ताः । हर॑यः । व॒ह॒न्तु॒ ।

य॒दा । क॒दा । च॒ । सु॒नवा॑म । सोमं॑म् । अ॒ग्निः । त्वा॒ । दू॒तः । ध॒न्वा॒ति॒ । अच्छं॑ ॥४

जाया । इत् । अस्तम् । मघऽवन् । सा । इत् । ऊं इति । योनिः । तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु ।

यदा । कदा । च । सुनवाम । सोमम् । अग्निः । त्वा ।
दूतः । धन्वाति । अच्छ ॥४

हे “मघवन् धनवन्निन्द्र “अस्तम् । अस्यन्ते क्षिप्यन्ते पदार्था अत्रेत्यस्तं गृहम् । “जायेत् जायैव गृहं भवति । न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतेः । तथा "सेत् सा जायैव “योनिः पुरुषस्य मिश्रणस्थानम्। "उ प्रसिद्ध्यर्थः। तस्मात् “तदित् तत्र गृहे एव “युक्ताः रथे योजिताः “हरयः अश्वाः “त्वा त्वां “वहन्तु । वयं तु “यदा “कदा "च त्वदर्थं “सोमं “सुनवाम अभिषुतं करवाम तदास्माभिः प्रहितः "दूतः “अग्निः “त्वा त्वाम् “अच्छ आभिमुख्येन “धन्वाति गच्छेत् ॥ अस्तम् । असु क्षेपणे'।' असिहसिमृग्रिण्वामि°' इत्यादिना तन्प्रत्ययः । नित्वात् आद्युदात्तः । सुनवाम । षुञ् अभिषवे' इत्यस्य लोटि रूपम् । यद्वृत्तयोगादनिघातः । त्वा । ‘युष्मत्तत्ततक्षुष्वन्तःपादम्' इति संहितायां षत्वम्

। धन्वाति । धवि गत्यर्थः । लेट्याडागमे रूपम् । निघातः ॥

अहर्गणेऽन्त्यवर्जितेष्वहःसु हारियोजनस्य वैकल्पिकी • परा याहि ' इत्यनुवाक्या । • परा याहि मघवन्ना च याहीति वानुवाक्या' ( आश्व. श्रौ. ६. ११ ) इति सूत्रितम् ॥

परा॑ याहि मघव॒न्ना च॑ या॒हीन्द्र॑ भ्रातरुभ॒यत्रा॑ ते॒ अर्थ॑ ।

यत्रा॒ रथ॑स्य बृह॒तो नि॒धानं॑ वि॒मोच॑नं वा॒जिनो॒ रास॑भस्य ॥५

परा॑ । या॒हि॒ । म॒घ॒ऽव॒न् । आ । च॒ । या॒हि॒ । इन्द्र॑ । भ्रा॒त॒ः । उ॒भ॒यत्र॑ । ते॒ । अर्थ॑म् ।

यत्र॑ । रथ॑स्य । बृ॒ह॒तः । नि॒ऽधान॑म् । वि॒ऽमोच॑नम् । वा॒जिन॑ः । रास॑भस्य ॥५

परा । याहि । मघऽवन् । आ । च । याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् ।

यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । रासभस्य ॥५

हे “मघवन् धनवन् “इन्द्र त्वं “परा “याहि अस्माद्देवयजनात् पराङ्मुखो गृहं प्रति गच्छ । अथवा देवयजनं प्रति “आ “याहि । हे "भ्रातः पोषक “उभयत्र अपि “ते तव “अर्थम् । अर्यते प्राप्यत इत्यर्थः प्रयोजनम् । अस्ति तत्र जाया अत्र सोमः । प्रयोजनान्तरमाह । “यत्र गृहं प्रति गमने “बृहतः महतः “रथस्य उपरि “निधानम् अवस्थानं प्रयोजनम् । अत्र स्थितौ “रासभस्य हेषारवं कुर्वतः “वाजिनः अश्वस्य रथात् “विमोचनं प्रयोजनम् ॥ अर्थम् । ॠ गतौ ।' उषिकुषिगार्तिभ्यस्थन् । इति थन् । नित्स्वरः । निधानम् । दधातेर्भावे ल्युट् । ‘लिति' इति

प्रत्यययात्पूर्व स्योदात्तत्वम् । रासभस्य । 'रासृ शब्दे'। 'रासिवल्लिभ्यां च ' ( उ. सू. ३. ४०५) इति कर्तरि अभच्प्रत्ययः । ग्रामादित्वादाद्युदात्तः ॥ ॥ १९ ॥

अन्त्येष्वहःसु हारियोजनस्य 'अपाः सोमम्' इत्यनुवाक्या । सूत्रितं च- हारियोजनोऽपाः सोममस्तमिन्द्र प्र याहि ' ( आश्व. श्रौ. ६. ११ ) इति ।

अपा॒ः सोम॒मस्तं॑मिं॑द्र॒ प्र यां॑हि कल्या॒णीर्जा॒या सु॒रणं॑ गृ॒हे तें॑ ।

यत्रा॒ रथं॑स्य बृह॒तो नि॒धानं॑ वि॒मोचं॑नं वा॒जिनो॒ दक्षिं॑णावत् ॥६

अपा॑ः । सोमं॑म् । अस्तं॑म् । इ॒न्द्र॒ । प्र । या॒हि॒ । क॒ल्या॒णीः । जा॒या । सु॒ऽरणं॑म् । गृ॒हे । ते॒ ।

यत्रं । रथंस्य । बृ॒ह॒तः । नि॒ऽधानंम् । वि॒ऽमोचंनम् । वा॒जिनः॑ । दक्षिंणाऽवत् ॥६

अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुऽरणम् । गृहे । ते ।

यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । दक्षिणाऽवत् ॥६

हे “इन्द्र “सोमम् “अपाः । अत्रैव स्थित्वा सोमं पिब । पीत्वा “अस्तं गृहं “प्र “यहि प्रकर्षेण गच्छ । "ते तव "गृहे “कल्याणीः मङ्गलकारिणी “जाया शची विद्यते । “सुरणं शोभनगीतादिध्वनिश्चास्ति । यद्वा । सुरणं सुरमणीयं यथा भवति तथा गृहे जाया तिष्ठति । “यत्र इत्यादि गतम् । "दक्षिणावत् । अत्र स्थितौ सत्यां रथे योजितानां वाजिनां विमोचनं खादनपानादिना दक्षिणावत् प्रयोजनवद्भवति । विमुक्तेभ्यो वाजिभ्यः खादनं पानं चोपहरन्ति । अपाः।'

पा पाने'। लुङि' गातिस्था इति. सिचो लुक् ।
अडागमस्वरः । कल्याणीः । कल्याणमस्यास्तीति मत्वर्थे ' छन्दसीवनिपौ' इति ईप्रत्ययः । प्रत्ययस्वरः । सुरणम् । रण शब्दार्थः । अस्मादकृच्छ्रार्थे खल् । लित्स्वरः। प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः । समासे कृदुत्तरपदस्वरः ॥

इ॒मे भो॒जा अंगि॑रसो॒ वि॑रू॑पा दि॒वस्पु॒त्रासो॒ असु॑रस्य वी॒राः ।

वि॒श्वामि॑त्राय॒ दद॑तो म॒घानि॑ सहस्रसा॒वे प्र ति॑रं॑त॒ आयुः॑ ॥७

इ॒मे । भो॒जाः । अङ्गि॑रसः । विऽरू॑पाः । दि॒वः । पु॒त्रासः॑ । असु॑रस्य । वी॒राः ।

वि॒श्वामि॑त्राय । दद॑तः । म॒घानि॑ । स॒ह॒स्र॒ऽसा॒वे । प्र । ति॒र॒न्ते॒ । आयु॑ः ॥७

इमे । भोजाः । अङ्गिरसः । विऽरूपाः । दिवः । पुत्रासः । असुरस्य । वीराः ।

विश्वामित्राय । ददतः । मघानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥७

हे इन्द्र "इमे यागं कुर्वाणाः "भोजाः सौदासाः क्षत्रियास्तेषां याजकाः ""विरूपाः नानारूपाः मेधातिथिप्रभृतयः "अङ्गिरसः च "दिवः "असुरस्य देवेभ्योऽपि बलवतो रुद्रस्य "पुत्रासः पुत्राः "वीराः बलवन्तो मरुतः ते सर्वे विश्वामित्राय मह्यं "सहस्रसावे । सहस्रं सूयतेऽत्रेति सहस्रसावोऽश्वमेधः । तस्मिन्नश्वमेधे "मघानि मंहनीयानि धनानि "ददतः प्रयच्छन्तः सन्तः "आयुः जीवनमन्नं वा "प्र "तिरन्ते प्रकर्षेण वर्धयन्ति ॥ दिवस्पुत्रास इति संहितायां '

षष्याःान पतिपुत्र° ' इति विसर्जनीयस्य सत्वम् । ददतः । ' डुदाञ् दाने ' इत्यस्य शतरि रूपम् । ' अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । तिरन्ते । तरतेर्व्यत्ययेन शः ॥

रू॒पंरू॑पं म॒घवा॑ बोभवीति मा॒याः कृ॑ण्वा॒नस्त॒न्वं१॒ परि॒ स्वां ।

त्रिर्यद्दि॒वः परि॑ मुहू॒र्तमागा॒त्स्वैर्मं॑त्रै॒रनृ॑तुपा ऋ॒तावा॑ ॥८

रू॒पम्ऽरू॑पम् । म॒घऽवा॑ । बो॒भ॒वी॒ति॒ । मा॒याः । कृ॒ण्वा॒नः । त॒न्व॑म् । परि॑ । स्वाम् ।

त्रिः । यत् । दि॒वः । परि॑ । मु॒हू॒र्तम् । आ । अगा॑त् । स्वैः । मन्त्रैः॑ । अनृ॑तुऽपाः । ऋ॒तऽवा॑ ॥८

रूपम्ऽरूपम् । मघऽवा । बोभवीति । मायाः । कृण्वानः । तन्वम् । परि । स्वाम् ।

त्रिः । यत् । दिवः । परि । मुहूर्तम् । आ । अगात् । स्वैः । मन्त्रैः । अनृतुऽपाः । ऋतऽवा ॥८

“मघवा धनवानिन्द्रः "रूपंरूपं यद्यद्रूपं कामयते तत्तद्रूपं “बोभवीति भृशं प्राप्नोति । तत्तद्रूपात्मको भवति । तत्र कारणमुच्यते । “मायाः अनेकरूपग्रहणसामर्थ्योपेताः “कृण्वानः कुर्वाणः “स्वां “तन्वं स्वकीयां तनूम् । “परि पञ्चम्यर्थे । स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते। यद्वा स्वां तनूं नानाविधरूपोपेतां करोति । तथा च मन्त्रवर्णः - इन्द्रो मायाभिः पुरुरूपः' (ऋ. सं. ६.४७.१८ ) इति । “यत् यस्मात् “स्वैर्मन्त्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूतः "अनृतुपाः । न केवलमृतुष्वेव पिबति किंतु अनृतुष्वपि । बहुशः सोमं पिबन्नित्यर्थः ।

“ऋतावा सत्यवान् तादृश इन्द्रः "दिवः स्वर्गलोकात् “परि “मुहूर्तम् एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु तत्रापि “त्रिः त्रिषु सवनेषु “आगात् आगच्छति ॥ बोभवीति । भवतेर्यङ्लुकि तिपि ' यङो वा ' इतीडागमः । निघातः । अगात् । इणो लुङि रूपम् । यद्वृत्तयोगादनिघातः ॥

म॒हाँ ऋषिर्दे॑व॒जा दे॒वजू॑तोऽस्तंभ्ना॒त्सिंधु॑मर्ण॒वं नृ॒चक्षाः॑ ।

वि॒श्वामि॑त्रो॒ यदव॑हत्सु॒दास॒मप्रि॑यायत कुशि॒केभि॒रिंद्रः॑ ॥९

म॒हान् । ऋषिः॑ । दे॒व॒ऽजाः । दे॒वऽजू॑तः । अस्त॑भ्नात् । सिन्धु॑म् । अ॒र्ण॒वम् । नृ॒ऽचक्षाः॑ ।

वि॒श्वामि॑त्रः । यत् । अव॑हत् । सु॒ऽदास॑म् । अप्रि॑यायत । कुशि॒केभिः॑ । इन्द्रः॑ ॥९

महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् । सिन्धुम् । अर्णवम् । नृऽचक्षाः ।

विश्वामित्रः । यत् । अवहत् । सुऽदासम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥९

“महान् तपसा अतिशयितसामर्थ्यवान् “ऋषिः अतीन्द्रियार्थद्रष्टा “देवजाः द्योतमानानां तेजसां जनयिता “देवजूतः तैस्तेजोभिराकृष्टः “नृचक्षाः नृणां कर्म नेतॄणामध्वर्वायदीनामुपद्रष्टा सः “विश्वामित्रः "अर्णवम् उदकवन्तं "सिन्धुं विपाट्छुतुद्र्योः संभेदम् “अस्तभ्नात् निरुद्धवेगमकरोत् । किंच स विश्वामित्रः “सुदासं पैजवनं राजानं “यत् यदा "अवहत् अयाजयत् तदानीम् “इन्द्रः “कुशिकेभिः कुशिकगोत्रोत्पनैर्ऋषिभिः सह “अप्रियायत प्रिय इवाचरत् ॥ अवहत् ।' वह प्रापणे ' इत्यस्य लङि रूपम् । यद्योगादनिघातः । अप्रियायत । प्रिय

इवाचरतीत्यर्थे ' कर्तुः क्यङ् सलोपश्च' इति क्यङ् ।
तदन्ताल्लङि रूपम् । पादादित्वादनिघातः ॥

हं॒सा इं॑व कृणुथ॒ श्लोक॒मद्रिं॑भि॒र्मदं॑तो गी॒र्भिरं॑ध्व॒रे सु॒ते सचां॑
।

दे॒वेभिं॑र्विप्रा ऋषयो नृचक्षसो॒ वि पिं॑बध्वं कुशिकाः सो॒म्यं
मधुं ॥१०

हं॒साःऽइं॑व । कृ॒णु॒थ॒ । श्लोकं॑म् । अद्रिं॑ऽभिः । मदं॑न्तः ।
गी॒ःऽभिः । अ॒ध्व॒रे । सु॒ते । सचां॑ ।

दे॒वेभिः॑ । वि॒प्राः॒ । ऋ॒ष॒यः॒ । नृ॒ऽच॒क्ष॒सः॒ । वि । पि॒ब॒ध्व॒म् ।
कु॒शि॒काः॒ । सो॒म्यम् । मधुं॑ ॥१०

हंसाःऽइव । कृणुथ । श्लोकम् । अद्रिऽभिः । मदन्तः ।
गीःऽभिः । अध्वरे । सुते । सचा ।

देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥१०

हे “विप्राः मेधाविनो हे “ऋषयः अतीन्द्रियार्थस्य द्रष्टारो हे “नृचक्षसः नृणां कर्मनेतॄणां विशेषेण द्रष्टारो हे “कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्राः “अध्वरे यज्ञे “अद्रिभिः ग्रावभिः सोमे "सुते अभिषुते सति “गीर्भिः “मदन्तः स्तुतिभिर्देवान् मादयन्तो यूयं “श्लोकम् । श्लोक्यते शस्यतेऽनेनेति श्लोकः शस्त्रम् । “कृणुथ सम्यगुच्चारयत । तत्र दृष्टान्तः । “हंसाइव । यथा हंसाः सम्यक् शब्दं कुर्वन्ति तद्वत् । किंच “देवेभिः “सचा यष्टव्यदेवैः सहिता यूयं “सोम्यं सोममयं “मधु मधुकरं रसं "वि “पिबध्वं परस्परव्यतिहारेण पिबत ॥ श्लोकम् ।' श्लोकृ शब्दे ' । करणे घञ् । ञित्वादाद्युदात्तः । मदन्तः । मदी हर्षे' इत्यस्यान्तर्भावितण्यर्थस्य व्यत्ययेन शप् । पिबध्वम् । ‘

पा पाने '।' कर्तरि कर्मव्यतिहारे ' इत्यात्मनेपदम् ।
सोम्यम् । सोमशब्दात् ' मये च ' इति यप्रत्ययः ॥ ॥ २० ॥

उप॒ प्रेतं कुशिकाश्चे॒तयंध्व॒मश्वं रा॒ये प्र मुंचता सु॒दासः॑ ।

राजां वृ॒त्रं जंघन॒त्प्रागपा॒गुद॒गथां यजाते॒ वर॒ आ पृंथि॒व्याः ॥११

उपं । प्र । इ॒त॒ । कु॒शि॒का॒ः । चे॒तयंध्वम् । अश्वंम् । रा॒ये । प्र । मु॒ञ्च॒त॒ । सु॒ऽदासः॑ ।

राजां । वृ॒त्रम् । ज॒ङ्घ॒न॒त् । प्राक् । अपांक् । उदंक् । अथं । य॒जा॒ते॒ । वरें । आ । पृ॒थि॒व्याः ॥११

उप । प्र । इत । कुशिकाः । चेतयध्वम् । अश्वम् । राये । प्र । मुञ्चत । सुऽदासः ।

राजा । वृत्रम् । जङ्घनत् । प्राक् । अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥११

हे "कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्राः “उप "प्रेत अश्वस्य समीपे प्रकर्षेण गच्छत । तत्र गत्वा केतयध्वं सावधाना भवत । यद्वा । अश्वरक्षिणः सावधानान् कुरुत । “सुदासः पैजवनस्य राज्ञः “अश्वं “राये तस्य दिग्विजयेन धनलाभाय “प्र “मुञ्चत । “राजा देवानां स्वामीन्द्रः “वृत्रं कर्मविघ्नकारिणमसुरं “प्रागपागुदक् पूर्वपश्चिमोत्तरेषु देशेषु "जङ्घनत् भृशं हतवान् । तस्मादश्वं विमुञ्चतेति भावः। “अथ अनन्तरं “पृथिव्याः “वरे उत्तमे देवयजनदेशे “यजाते स राजा यजेत ॥ चेतयध्वम् । चिती संज्ञाने' इत्यस्य ण्यन्तस्य लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन तिङ उत्तरत्वान्न निघातः । जङ्घनत् ।' हन हिंसागत्योः ' इत्यस्य यङ्लुकि “ नुगतोऽनुनासिकान्तस्य ' इत्यभ्यासस्य नुगागमः ।

तदन्ताल्लेट्यडागमः। प्राक् । अञ्चतेः क्विनि रूपम् ।“ अनिगन्तोऽञ्चतौ वप्रत्यये ' इति गतेः स्वरः। यजाते । यजतेर्लेट्याडागमः । निघातः । वरे । ' वृञ् वरणे ' इत्यस्मात् ' ग्रहवृदृनिश्चिगमश्च ' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

य इ॒मे रोद॑सी उ॒भे अ॒हमिंद्र॒मतु॑ष्टवं ।

वि॒श्वामिंत्रस्य रक्षति॒ ब्रह्मे॒दं भार॑तं॒ जनं ॥१२

यः । इ॒मे इतिं । रोद॑सी॒ इतिं । उ॒भे इतिं । अ॒हम् । इन्द्रंम् । अतु॑स्तवम् ।

वि॒श्वामिंत्रस्य । र॒क्ष॒ति॒ । ब्रह्मं । इ॒दम् । भार॑तम् । जनंम् ॥ १२

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुस्तवम् ।

विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥ १२

हे कुशिकाः कुशिकपुत्राः “यः "अहं विश्वामित्रः “उभे “इमे “रोदसी द्यावापृथिव्यौ इन्द्रमतुष्टवं स्तावयामि । द्यावापृथिवीभ्यामिन्द्रस्य स्तोत्रं मया कारितमित्यर्थः । यद्वा । उभयो रोदस्योः अन्तरवस्थितम् इन्द्रं स्तौमि । स्तोत्रं कुर्वाणस्य “विश्वामित्रस्य मम “इदम् इन्द्रविषयं “ब्रह्म स्तोत्रं “भारतं भरतकुलं “जनं “रक्षति पालयति ॥ अतुष्टवम् । ‘ष्टुञ् स्तुतौ '। ण्यन्तस्य लुङि चङि रूपम् । यद्वृत्तयोगादनिघातः । भारतम् । भरतशब्द उत्सादिः । ञित्त्वादाद्युदात्तः ॥

वि॒श्वामि॑त्रा अरासत॒ ब्रह्मेन्द्रा॑य व॒ज्रिणे॑ ।

कर॒दिन्नः॑ सु॒राध॑सः ॥१३

वि॒श्वामि॑त्राः । अ॒रा॒स॒त॒ । ब्रह्म॑ । इन्द्रा॑य । व॒ज्रिणे॑ ।

कर॑त् । इत् । न॒ः । सु॒ऽराध॑सः ॥१३

विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे ।

करत् । इत् । नः । सुऽराधसः ॥१३

“विश्वामित्राः “वज्रिणे वज्रहस्ताय “इन्द्राय “ब्रह्म स्तोत्रम् "अरासत अकुर्वन् । स्तुतः स इन्द्रः “नः अस्मान् "सुराधसः शोभनधनोपेतान् “करदित् करोत्वेव ।। अरासत । ‘ रासृ शब्दे ' इत्यस्य लङि ‘ बहुलं छन्दसि ' इति शपो लुक् । निघातः । करत् । करोतेर्लुङि च्लेः '

कृमृदृरुहिभ्यश्छन्दसि' इत्यङादेशः । सुराधसः । '
आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् ॥

किं तें कृण्वंति॒ कीकंटेषु॒ गावो॒ नाशिरं दु॒ह्रे न तंपंति घ॒र्मं ।

आ नों भर॒ प्रमंगंदस्य॒ वेदों नैचाश॒ाखं मंघवन्रंधया नः ॥१४

किम् । ते॒ । कृ॒ण्व॒न्ति॒ । कीकंटेषु । गावः॑ । न । आ॒ऽशिरंम् । दु॒ह्रे । न । त॒प॒न्ति॒ । घ॒र्मम् ।

आ । न॒ः । भ॒र॒ । प्रऽमंगन्दस्य । वेदः॑ । नै॒चा॒ऽश॒ाखम् । म॒घ॒ऽव॒न् । र॒न्ध॒य॒ । न॒ः ॥१४

किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न । आऽशिरम् । दुह्रे । न । तपन्ति । घर्मम् ।

आ । नः । भर । प्रऽमगन्दस्य । वेदः । नैचाऽशाखम् ।
मघऽवन् । रन्धय । नः ॥१४

हे इन्द्र “कीकटेषु अनार्यनिवासेषु जनपदेषु । यद्वा । क्रियाभिर्यागदानहोमलक्षणाभिः किं फलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबत खादतायमेव लोको न पर इति वदन्तो नास्तिकाः कीकटाः तेषु । “गावः “ते तव “किं “कृण्वन्ति किं कुर्वन्ति । न क्वचित्तवोपयोगं कुर्वन्तीत्यर्थः । अनुपयोगं दर्शयति । “आशिरं सोममिश्रणयोग्यं पयः “न “दुहे न दुहन्ति । किंच “घर्मं प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण “न “तपन्ति “न दीपयन्ति । एतेन सांनाय्याद्यर्थमपि नोपयुज्यन्ते इत्यपि सूचितं भवति । एवं क्वचिदपि वैदिके कर्मण्यनुपयुक्तास्ता गाः “नः अस्मभ्यम् “आ “भर आहर । न केवलं ता एव । किं तर्हि “प्रमगन्दस्य । द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति

बुद्ध्या परेषां ददातीति मगन्दो वार्धुषिकः । तस्यापत्यं पुत्रादिः प्रमगन्दः । प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते । तस्यात्यन्तकुसीदिकुलस्य "वेदः धनमाहर। किंच हे “मघवन् धनवन्निन्द्र “नैचाशाखम् । नीचासु शूद्रयोनिषु उत्पादिता शाखा पुत्रपौत्रादिपरंपरा येन स नीचाशाखः । ‘ शूद्रापत्यैश्च केवलैः । ‘ शूद्रावेदी’ पतस्यधः' इति च पातकहेतुत्वेन स्मरणात् । पतितस्य संबन्धि धनं नैचाशाखम् । तद्धनं “नः अस्मभ्यं “रन्धय साधय । एतेषां तद्धनं तव नोपयुज्यते अस्मदायत्तं तु तद्धनं यागादिद्वारा तवोपयुज्यते । तस्मात्तदस्मभ्यं प्रयच्छेति भावः ॥ एतमर्थं यास्कोऽप्याह- किं ते कुर्वन्ति कीकटेषु गावः । कीकटा नाम देशोऽनार्य निवासः । कीकटाः किंकृताः किं क्रियाभिः इतिप्रेप्साः वा। नैव चाशिरं दुहे न तपन्ति घर्मं घरणम्। आ हर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी मांगदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगन्दः अत्यन्त कुसीदिकुलीनः। प्रमदको वा योऽयमेवास्ति

लोको न पर इति प्रेप्सुः । पण्डको वा पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डौ । आण्डावाणी इव व्रीडयति । तत्स्थं नैचाशाखम् । नीचाशाखो नीचैःशाखः । शाखाः शक्नोतेः । आणिररणात् । तन्नो मघवन् रन्धय इति रध्यतिर्वशगमने' (निरु. ६. ३२) इति ॥ आशिरम् । आङ्पूर्वात् श्रीणीतेः क्विपि 'अपस्पृधेथाम् ' इत्यादिना आशिर इत्यादेशः । दुहे। दुहेर्लिटि ‘ इरयो रे ' इति रेआदेशः । द्विर्वचनस्य विकल्पितत्वात् द्विर्वचनाभावः। ‘ चादिलोपे विभाषा ' इति न निघातः । नैचाशाखम् । तस्येदम्' इत्यण् । प्रत्ययस्वरः । रन्धय । रधेर्ण्यन्तस्य ‘रधिजभोरचि ' इति नुमागमः ॥

‘ ससर्परीद्वृचे० प्राहुरितिहासं पुराविदः । सौदासनृपयज्ञे वै वसिष्ठात्मजशक्तिना । विश्वामित्रस्याभिभूतं बलं वाक् च समन्ततः । वासिष्ठेनाभिभूतः स ह्यवासीदथ गाधिजः ।

तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् । सूर्यवेश्मन आहृत्य ददुर्वै जमदग्नयः । कुशिकानां मतिः सा वागमतिं तामपानुदत्' (अनु. भा. ३. ५३ ) ॥

स॒स॒र्प॒रीरम॑ति॒ं बाध॑माना बृ॒हन्मि॑माय ज॒मद॑ग्निदत्ता ।

आ सूर्य॑स्य दुहि॒ता त॑ताऩ॒ श्रवो॑ दे॒वेष्व॒मृत॑मजु॒र्यं॑ ॥१५

स॒स॒र्प॒रीः । अम॑तिम् । बाध॑माना । बृ॒हत् । मि॒मा॒य॒ । ज॒मद॑ग्निऽदत्ता ।

आ । सूर्य॑स्य । दु॒हि॒ता । त॒ता॒न॒ । श्रवः॑ । दे॒वेषु॑ । अ॒मृत॑म् । अ॒जु॒र्यम् ॥१५

ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय । जमदग्निऽदत्ता ।

आ । सूर्यस्य । दुहिता । ततान । श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥१५

"जमदग्निदत्ता जमदग्निभिः प्रज्वलिताग्निभिर्ऋषिभिरस्मभ्यं दत्ता “अमतिम् अज्ञानं “बाधमाना “ससर्परीः सर्वत्र शब्दरूपतया सर्पणशीला वाक् “बृहत् प्रभूतं यथा भवति तथा “मिमाय नभसि शब्दं करोति । सैषा "सूर्यस्य "दुहिता वाग्देवता “देवेषु इन्द्रादिषु “अजुर्यं क्षयरहितम् "अमृतम् अमृतलक्षणं “श्रवः अन्नम् “आ “ततान समन्तात् स्वाहाकारवाचा' तनोति ॥ जमदग्निदत्ता । ‘दाण् दाने' इत्यस्य निष्ठायां ‘दो दद्घोः' इति ददादेशः । तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः । अजुर्यम् । ‘जॄ वयोहानौ '। ऋहलोर्ण्यत्'। ‘ बहुलं छन्दसि' इत्युत्वम् ।' नञ्सुभ्याम् ' इत्यन्तोदात्तत्वम् ॥२१॥

स॒स॒र्प॒रीर॑भर॒त्तूय॑मे॒भ्योऽधि॒ श्रव॒: पांच॑जन्यासु कृ॒ष्टिषु॑ ।

सा प॒क्ष्या॒३॒ नव्य॒मायु॒र्दधा॑ना॒ यां मे॑ पलस्तिजमद॒ग्नयो॑ द॒दुः
॥१६

स॒स॒र्प॒रीः । अ॒भ॒र॒त् । तूय॑म् । ए॒भ्य॒: । अधि॑ । श्रव॑: ।
पाञ्च॑ऽजन्यासु । कृ॒ष्टिषु॑ ।

सा । प॒क्ष्या॑ । नव्य॑म् । आयु॑: । दधा॑ना । याम् । मे॒ ।
प॒ल॒स्ति॒ऽज॒म॒द॒ग्नय॑: । द॒दुः ॥१६

ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः ।
पाञ्चऽजन्यासु । कृष्टिषु ।

सा । पक्ष्या । नव्यम् । आयुः । दधाना । याम् । मे ।
पलस्तिऽजमदग्नयः । ददुः ॥१६

"ससर्परीः सर्वत्र गद्यपद्यात्मकत्वेन सर्पणशीला वाग्देवता "पाञ्चजन्यासु "कृष्टिषु । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तत्संबन्धिनीषु प्रजासु यत् "श्रवः अन्नं विद्यते तन्नोऽस्मभ्यम् "अधि अधिकं यथा भवति तथा "तूयं क्षिप्रम् "अभरत् भरतु संपादयतु । "पलस्तिजमदग्नयः पलस्तयः पलिता दीर्घायुषो जमदग्नयो मुनयः "यां वाचं सूर्यादाहृत्य "मे मह्यं "ददुः अददुः "पक्ष्या पक्षस्य पक्षादिनिर्वाहकस्य सूर्यस्य दुहिता "सा वाक् "नव्यं नवतरम् "आयुः अन्नं जीवनं वा "दधाना मम कुर्वाणा भवतु ॥ पाञ्चजन्यासु ।' बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञ्यप्रत्ययः । ञित्त्वादाद्युदात्तः । पक्ष्या । पक्षे भवा । दिगादित्वाद्यत् । तित्स्वरितः । नव्यम् । नवशब्दात् वस्वादित्वात् स्वार्थिको यत् । पलस्तिजमदग्नयः पलस्तयो जमदग्नयः । कर्मधारयसमासः । समासस्वरः ।।

स्थि॒रौ गावौं भवतां वी॒ळुरक्षो॒ मेषा वि वंर्हि॒ मा यु॒गं वि शांरि ।

इंद्रः॑ पात॒ल्यें ददता॒ं शरींतो॒ररिंष्टनेमे अ॒भि नः॑ सचस्व ॥१७

स्थि॒रौ । गावौं । भ॒व॒ता॒म् । वी॒ळुः । अक्षः॑ । मा । ई॒षा । वि । व॒र्हि॒ । मा । यु॒गम् । वि । शा॒रि॒ ।

इन्द्रः॑ । पा॒त॒ल्ये॒३॒ इतिं । द॒द॒ता॒म् । शरींतोः । अरिंष्टऽनेमे । अ॒भि । न॒ः । स॒च॒स्व॒ ॥१७

स्थिरौ । गावौ । भवताम् । वीळुः । अक्षः । मा । ईषा । वि । वर्हि । मा । युगम् । वि । शारि ।

इन्द्रः । पातल्ये इति । ददताम् । शरीतोः । अरिष्टऽनेमे । अभि । नः । सचस्व ॥१७

राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गन्तुमिच्छन् रथे अश्वादिकं युञ्जानो विश्वामित्रो रथाङ्गानि स्तौति । “गावौ । गच्छत इति गावावश्वौ । “स्थिरौ “भवताम् । “अक्षः च “वीळुः दृढो भवतु । “ईषा दण्डश्च “मा “वि “वर्हि विनष्टो मा भवतु । "युगं च “मा “वि “शारि विशीर्णं मा भवतु । “इन्द्रः “पातल्ये पतनशीले कीलके “शरीतोः विशरणात् प्राक् “ददतां धारयतु । हे “अरिष्टनेमे अहिंसितप्रधिविशिष्ट हे रथ “नः अस्मान् “अभि आभिमुख्येन "सचस्व संगतो भव ॥ वि वर्हि । ' वृहि वृद्धौ । विपूर्वो वृहिर्विनाशे वर्तते । अस्मात् कर्मकर्तरि लुङि ‘चिण् भावकर्मणोः' इति चिण् । चिणो लुक्' इति तप्रत्ययस्य लुक् । निघातः । युगम् । युगशब्दे उञ्छादिषु रथाद्युपकरणेऽर्थे घञन्तत्वेन निपातनादगुणत्वम् । तत्र पाठादन्तोदात्तत्वम् । शारि । ‘ शॄ हिंसायाम्' इत्यस्य लुङि रूपम् । अरिष्टनेमे । पादादित्वात् षाष्टिकमाद्युदात्तत्वम् ॥

बल॑ं धेहि त॒नूषु॑ नो॒ बल॑मिंद्रान॒ळुत्सु॑ नः ।

बल॑ं तो॒काय॒ तन॑याय जी॒वसे॒ त्वं हि ब॑ल॒दा असि॑ ॥१८

बल॑म् । धे॒हि॒ । त॒नूषु॑ । न॒ः । बल॑म् । इ॒न्द्र॒ । अ॒न॒ळुत्ऽसु॑ ।
न॒ः ।

बल॑म् । तो॒काय॑ । तन॑याय । जी॒वसे॑ । त्वम् । हि ।
ब॒ल॒ऽदाः । असि॑ ॥१८

बलम् । धेहि । तनूषु । नः । बलम् । इन्द्र । अनळुत्ऽसु ।
नः ।

बलम् । तोकाय । तनयाय । जीवसे । त्वम् । हि ।
बलऽदाः । असि ॥१८

हे “इन्द्र “नः अस्माकं “तनूषु शरीरेषु “बलं “धेहि । “नः अस्मत्संबन्धिरथवाहेषु “अनळुत्सु अनडुत्सु “बलं धेहि । “तोकाय पुत्राय “तनयाय पौत्राय च "जीवसे चिरं जीवनाय “बलम् आयुर्विधेहि। एतादृशं दातृत्वं कुत इत्यत आह । “त्वं “बलदाः । बलं ददातीति बलदाः । "असि “हि सर्वेषु लोकेषु प्रसिद्धोऽसि खलु॥ अनळुत्सु। ‘वह प्रापणे'। अनसि वहेः क्विबनसो डश्च' इति क्विप्। अनसः सकारस्य डत्वम्। वहेर्यजादित्वात् संप्रसारणम् । “वसुस्रंसुध्वंस्वनडुहां दः' इति हकारस्य दत्वम् । कृदुत्तरस्वरः। असि । हियोगादनिघातः । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः ॥

अ॒भि व्यं॑यस्व खदि॒रस्य॒ सार॒मोजों धेहि स्पंद॒ने शिं॒शपा॑यां ।

अक्षं वीळो वीळित वी॒ळयं॑स्व॒ मा यामां॑द॒स्मादवं जीहिपो नः ॥१९

अ॒भि । व्य॒य॒स्व॒ । ख॒दि॒रस्यं । सारं॑म् । ओज॑ः । धे॒हि॒ । स्प॒न्द॒ने । शिं॒शपां॑याम् ।

अक्षं । वी॒ळो॒ इतिं । वी॒ळि॒त॒ । वी॒ळयं॑स्व । मा । यामां॑त् । अ॒स्मात् । अवं । जी॒हि॒पः॒ । नः॒ ॥१९

अभि । व्ययस्व । खदिरस्य । सारम् । ओजः । धेहि । स्पन्दने । शिंशपायाम् ।

अक्ष । वीळो इति । वीळित । वीळयस्व । मा । यामात् । अस्मात् । अव । जीहिपः । नः ॥१९

हे इन्द्र “खदिरस्य “सारम् । सारेण हि आणिः क्रियते । तं खदिरस्य सारभूतमाणिम् “अभि “व्ययस्व अभितस्तत्तत्स्थानेषु दाढ्यार्थं निधेहि । “स्पन्दने रथस्य

गमने सति “शिशपायां शिंशपाख्यदारुनिर्मिते रथस्य फलके "ओजो “धेहि दार्ढ्यं कुरु । हे “वीळो दृढ “वीळित अस्माभिर्दृढीकृत हे “अक्ष “वीळयस्व त्वं दृढो भव। यद्वा अस्मान् दृढीकुरु । “यामात् गच्छतः अस्माद्रथात् “नः अस्मान् “मा “अव “जीहिपः मा पीपतः ॥ खदिरस्य । ‘ अजिरशिशिर ' इत्यादिना किरच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः । वीळित । वीळयतेर्ण्यन्तस्य निष्ठायामिडागमः । ‘ निष्ठायां सेटि ' ( पा. सू. ६.४. २३) इति णेर्लुक् । वीळयस्व । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । यामात् ।' या प्रापणे ' इत्यस्मात् ‘अर्तिस्तुसुहुसृ° ' इत्यादिना मन्प्रत्ययः । नित्त्वदाद्युदात्तः । जीहिपः । ‘ ओहाक् त्यागे । ण्यन्तस्य लुङि चङि रूपम् । अकारस्येकारश्छान्दसः ॥

अ॒यम॒स्मान्वन॒स्पति॒र्मा च॒ हा मा चं रीरिषत् ।

स्व॒स्त्या गृ॒हेभ्य॒ आव॒सा आ वि॒मोच॑नात् ॥२०

अ॒यम् । अ॒स्मान् । वन॒स्पतिः॑ । मा । च॒ । हाः । मा । च॒ । रि॒रि॒ष॒त् ।

स्व॒स्ति । आ । गृ॒हेभ्यः॑ । आ । अ॒व॒सै । आ । वि॒ऽमोच॑नात् ॥२०

अयम् । अस्मान् । वनस्पतिः । मा । च । हाः । मा । च । रिरिषत् ।

स्वस्ति । आ । गृहेभ्यः । आ । अवसै । आ । विऽमोचनात् ॥२०

यजमान आत्मनः श्रेय आशास्ते । “वनस्पतिः वनस्पतिनिर्मितः “अयं रथो रथारूढान् “अस्मान् “मा “च "हाः मा त्याक्षीत् । किंच “मा “रीरिषत् अस्मान् मा विनाशयतु । किंच “आ “गृहेभ्यः यावद्गृहान् प्राप्नुयाम

तावदस्मभ्यं “स्वस्ति भवतु । तथा “आ “अवसै । पञ्चम्यर्थे चतुर्थी । यावद्रथवेगावसानं तावत् । “आ “विमोचनात् यावद्रथयोजिताश्वविमोचनं तावत् स्वस्ति भवतु ॥ हाः । “ओहाक् त्यागे' । लुङि ‘मन्त्रे घस' इत्यादिना सिचो लुक् । पुरुषव्यत्ययः । ‘चवायोगे प्रथमा' इति न निघातः । रीरिषत् । “रिष हिंसायाम्' इत्यस्य ण्यन्तस्य लुङि चङि रूपम्। द्वितीयत्वान्निघातः । गृहेभ्यः । ग्रहेः ‘गेहे कः' इति कः । ‘पञ्चम्यपाङ्परिभिः' इति पञ्चमी । अवसै । ' षोऽन्तकर्मणि' । क्विप् । चतुर्थ्येकवचने आतो लोपाभावश्छान्दसः । वृद्धिः । एकादेशस्वरः ॥ ॥ २२ ॥

इंद्रो॒तिभिं॑र्बहु॒लाभिं॑र्नो अ॒द्य यां॑च्छ्रे॒ष्ठाभिं॑र्मघवंछूर जिन्व ।

यो नो॒ द्वेष्ट्यध॑रः॒ सस्प॑दीष्ट॒ यमु॑ द्वि॒ष्मस्तमु॑ प्रा॒णो ज॑हातु ॥२१

इन्द्र॑ । ऊ॒तिऽभिः॑ । ब॒हु॒लाभिः॑ । नः॒ । अ॒द्य ।
या॒त्ऽश्रे॒ष्ठाभिः॑ । म॒घ॒ऽव॒न् । शू॒र॒ । जि॒न्व॒ ।

यः । नः॒ । द्वेष्टि॑ । अध॑रः । सः । प॒दी॒ष्ट॒ । यम् । ऊँ॒ इति॑ ।
द्वि॒ष्मः । तम् । ऊँ॒ इति॑ । प्रा॒णः । ज॒हा॒तु॒ ॥२१

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य ।
यात्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व ।

यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यम् । ऊं इति ।
द्विष्मः । तम् । ऊं इति । प्राणः । जहातु ॥२१

परस्य शापं करिष्यन् आदावात्मनो रक्षां कुरुते प्रथमेनार्धर्चेन । हे "शूर शौर्यवन् पराभिभवशक्त हे “मघवन् धनवन् “इन्द्र “अद्य अस्मिन्काले "यात् ।

यातयतिर्वधकर्मा । यातयतीति यात् । सुपां सुलुक्' इति शसो लुक् । यातः शत्रून् हिंसतः "नः अस्मान् “ऊतिभिः त्वदीयाभी रक्षाभिः "जिन्व प्रीणय । कीदृशीभिः । “बहुलाभिः बह्वीभिः “श्रेष्ठाभिः प्रशस्यतराभिः । अथ शपति । "नः अस्मान् “यः शत्रुर्द्वेष्यः “द्वेष्टि अस्मद्विषयामप्रीतिं करोति “सः “अधरः निकृष्टः सन् "पदीष्ट पततु । वयं च “यमु “द्विष्मस्तमु तं द्वेष्यं “प्राणः देहमध्ये वर्तमानः पञ्चवृत्तिर्वायुः “जहातु परित्यजतु । उशब्दौ पूरकौ ॥

प॒र॒शुं चि॒द्वि तंपति शिंब॒लं चि॒द्वि वृंश्चति ।

उ॒खा चिंदिंद्र॒ येषंती॒ प्रयंस्ता॒ फेनंमस्यति ॥२२

प॒र॒शुम् । चि॒त् । वि । त॒प॒ति॒ । शि॒म्ब॒लम् । चि॒त् । वि । वृ॒श्च॒ति॒ ।

उ॒खा । चि॒त् । इ॒न्द्र॒ । येषं॑न्ती । प्रऽयं॑स्ता । फेनं॑म् । अ॒स्य॒ति॒ ॥२२

परशुम् । चित् । वि । तपति । शिम्बलम् । चित् । वि । वृश्चति ।

उखा । चित् । इन्द्र । येषन्ती । प्रऽयस्ता । फेनम् । अस्यति ॥२२

हे “इन्द्र “परशुं “चित् यथा कुठारं प्राप्य वृक्षः "वि “तपति विशिष्टतापयुक्तो भवति । एवं मदीयो द्वेष्टा वितपतु । “शिम्बलं “चित् शल्मलीकुसुमं यथा अनायासेन वृन्तात् विच्छिद्यते । एवं मद्द्वेष्टा “वि “वृश्चति विच्छिन्नावयवः भवतु । “प्रयस्ता प्रहता “येषन्ती स्रवन्ती “उखा “चित् स्थालीव स द्वेष्टा मदीयमन्त्रसामर्थ्येन प्रहतः सन् “फेनमस्यति फेनं मुखाद्गिरतु ॥

न सायंकस्य चिकिते जनासो लो॒धं नंयंति॒ पशु॒ मन्यंमानाः ।

नावांजिनं वा॒जिनां हासयंति॒ न गंर्द॒भं पु॒रो अश्वांन्नयंति ॥ २३

न । सायंकस्य । चि॒कि॒ते॒ । ज॒ना॒सः॒ । लो॒धम् । न॒य॒न्ति॒ । पशुं । मन्यंमानाः ।

न । अवांजिनम् । वा॒जिनां । हा॒स॒य॒न्ति॒ । न । ग॒र्द॒भम् । पु॒रः । अश्वांत् । न॒य॒न्ति॒ ॥२३

न । सायकस्य । चिकिते । जनासः । लोधम् । नयन्ति । पशु । मन्यमानाः ।

न । अवाजिनम् । वाजिना । हासयन्ति । न । गर्दभम् । पुरः । अश्वात् । नयन्ति ॥२३

पुरा खलु तपसः क्षयो मा प्रापदिति शापान्निवृत्तं मौनिनं विश्वामित्रं वसिष्ठपुरुषा बद्ध्वा आनीतवन्तः । तान् प्रति विश्वामित्रो ब्रूते । हे “जनासः जनाः “सायकस्य अवसानकारिणो विश्वामित्रस्य मन्त्रगणसामर्थ्यं “न “चिकिते भवद्भिर्न ज्ञायते । अत एव “लोधं लुब्धं तपसः क्षयो मा भूदिति लोभेन तूष्णीं स्थितमृषिं “पशु “मन्यमानाः । पशु इति निपातः पशुशब्दसमानार्थः । पशुवन्मन्यमानाः एते “नयन्ति बद्ध्वा स्वकीयं देशं प्रापयन्ति । एवं स्वसामर्थ्यं प्रदर्श्य विसदृशो वसिष्ठो मया सह स्पर्धितुं नार्हतीति धिक्करोति । "नावाजिनम् इति । अवाजिनम् । वाचामिनो वाजिनः सर्वज्ञः । तद्विलक्षणं मूर्खजनं “वाजिना वागीशाः न “हासयन्ति हास्यास्पदं न कुर्वन्ति । तेन सह न स्पर्धन्त इत्यर्थः । तथा “गर्दभं रासभम् “अश्वात् “पुरः पुरस्तात् “न “नयन्ति । एवमेव विसदृशो वसिष्ठो न मया स्पर्धितुमीष्ट इत्यर्थः ॥

इ॒म इं॑द्र भ॒र॒तस्यं॑ पु॒त्रा अ॑पपि॒त्वं चि॑कितु॒र्न प्र॑पि॒त्वं ।

हि॒न्वं॑त्यश्वं॒मरं॑णं॒ न नित्यं॒ ज्यावा॑जं॒ परिं॑ णयं॑त्या॒जौ ॥२४

इ॒मे । इ॒न्द्र॒ । भ॒र॒तस्यं॑ । पु॒त्राः । अ॒प॒ऽपि॒त्वम् । चि॒कि॒तुः॒ । न । प्र॒ऽपि॒त्वम् ।

हि॒न्वन्ति॑ । अश्वं॑म् । अरं॑णम् । न । नित्यं॑म् । ज्या॒ऽवा॒जं॑म् । परिं॑ । न॒य॒न्ति॒ । आ॒जौ ॥२४

इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् । चिकितुः । न । प्रऽपित्वम् ।

हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् । ज्याऽवाजम् । परि । नयन्ति । आजौ ॥२४

हे “इन्द्र “भरतस्य “पुत्राः भरतवंश्याः “इमे विश्वामित्राः “अपपित्वम् अपगमनं वसिष्ठेभ्यः “चिकितुः जानन्ति । “प्रपित्वं प्रगमनं “न जानन्ति । शिष्टैः सह तेषां संगतिर्नास्ति । बाह्याः एव त इत्यर्थः । अपि च "आजौ संग्रामे “नित्यं सहजम् “अरणं “न अरिमिव वसिष्ठान् प्रति “अश्वं “हिन्वन्ति प्रेरयन्ति । ततश्च “ज्यावाजं बलं धनुः “परि “णयन्ति । वसिष्ठान् हन्तुं शरसंधानेन चरन्ति ।। ॥ २३॥

**टिप्पणी**

३.५३.१४ किं ते कुर्वन्ति कीकटेषु गावो इति

पशुबन्धः --

आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते चक्षुस्सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहा किक्किटा ते वाचँ सरस्वत्यै स्वाहा किक्किटा ते प्राणं वाताय स्वाहा ॥ - काठकसंहिता 13.11

किक्किटा ते मनः प्रजापतये स्वाहेति प्रजापतिमेवास्या मनो गमयति किक्किटा ते चक्षुस्सूर्याय स्वाहेति सूर्यमेवास्याश्चक्षुर्गमयति किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहेति द्यावापृथिवी एवास्याश्श्रोत्रं गमयति किक्किटा ते वाचँ सरस्वत्यै स्वाहेति सरस्वतीमेवास्या वाचं गमयति किक्किटा ते प्राणं वाताय स्वाहेति वातमेवास्याः प्राणं गमयति ।। किक्किटा त इति जुहोति तस्मात् किक्किटाकारं ग्राम्याः पशव उपतिष्ठन्ते किक्किटाकारादारण्याः प्रत्रसन्ति

पञ्चैतानि जुहोति पाङ्क्ताः पशवो यावानेव पशुस्तँ स्वर्गं लोकं गमयति - काठकसंहिता 13.12

आकूत्यै त्वा कामाय त्वा ॥ इत्य् आह यथायजुर् एवैतत् किक्किटाकारं जुहोति किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्रारण्याः पतन्ति यत् किक्किटाकारं जुहोति ग्राम्याणाम् पशूनां धृत्यै पर्यग्नौ क्रियमाणे जुहोति जीवन्तीम् एवैनाꣳ सुवर्गं लोकम् गमयति - तैसं ३.४.३.५

देवीभागवत ११.६.२१ ( कीकट में गर्दभ द्वारा रुद्राक्ष ढोने से शिव लोक प्राप्ति का कथन ), स्कन्द ४.२.९८.७६ ( महानन्द विप्र का कीकट देश में कुक्कुट बनने का वृत्तान्त ),

३.५३.१९ शिंशपाशब्दस्य व्याख्या

## मण्डल ३

| | | | |
|---|---|---|---|
| सूक्तं ३.१ | सूक्तं ३.२१ | सूक्तं ३.४१ | सूक्तं ३.६१ |
| सूक्तं ३.२ | सूक्तं ३.२२ | सूक्तं ३.४२ | सूक्तं ३.६२ |
| सूक्तं ३.३ | सूक्तं ३.२३ | सूक्तं ३.४३ | |
| सूक्तं ३.४ | सूक्तं ३.२४ | सूक्तं ३.४४ | |
| सूक्तं ३.५ | सूक्तं ३.२५ | सूक्तं ३.४५ | |
| सूक्तं ३.६ | सूक्तं ३.२६ | सूक्तं ३.४६ | |
| सूक्तं ३.७ | सूक्तं ३.२७ | सूक्तं ३.४७ | |
| सूक्तं ३.८ | सूक्तं ३.२८ | सूक्तं ३.४८ | |
| सूक्तं ३.९ | सूक्तं ३.२९ | सूक्तं ३.४९ | |
| सूक्तं ३.१० | सूक्तं ३.३० | सूक्तं ३.५० | |

# ऋग्वेदः सूक्तं ३.५४

ऋग्वेदः - मण्डल ३
← सूक्तं ३.५३ | सूक्तं ३.५४ | सूक्तं ३.५५ →

प्रजापतिर्वैश्वामित्रः, प्रजापतिर्वाच्यो वा।

## दे. विश्वे देवाः । त्रिष्टुप्

इमं महे विदथ्याय शूषं शश्वत्कृत्व ईड्याय प्र जभ्रुः ।

शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥१॥

महि महे दिवे अर्चा पृथिव्यै कामो म इच्छञ्चरति प्रजानन् ।

ययोर्ह स्तोमे विदथेषु देवाः सपर्यवो मादयन्ते सचायोः ॥२॥

युवोरृतं रोदसी सत्यमस्तु महे षु णः सुविताय प्र भूतम् ।

इदं दिवे नमो अग्ने पृथिव्यै सपर्यामि प्रयसा यामि रत्नम् ॥३॥

उतो हि वां पूर्व्या आविविद्र ऋतावरी रोदसी सत्यवाचः ।

नरश्चिद्वां समिथे शूरसातौ ववन्दिरे पृथिवि वेविदानाः ॥४॥

को अद्धा वेद क इह प्र वोचद्देवाँ अच्छा पथ्या का समेति ।

ददृश्र एषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥५॥

कविर्नृचक्षा अभि षीमचष्ट ऋतस्य योना विघृते मदन्ती ।

नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥६॥

समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ।

उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥७॥

विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।

एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥८॥

सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः ।

देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरन्तः ॥९॥

इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृणवन्नग्निजिह्वाः ।

